स्वीकृतं दुष्करं कर्म मया यस्य हितेच्छया ॥
तेन विज्ञायमानो मे फलितः श्रमपादपः ॥ १ ॥

ततस्तस्य शरीरादापुङ्ख निमग्नान्नाराचानुधृत्य यवनराजस्तं कुमारं भेषजप्रयोगेण नियमेन च स्वल्पैरेव दिवसैर्निर्व्राणक्षतमचीकरत्।तदन्तरं सहस्रसंख्यैस्तुरगैर्लक्षसंख्यैः काञ्चनैश्छत्रचामरादिभिश्च तं पूजयितुमुपचक्रमे । प्रसादावसरे नरसिंहदेव उवाच । राजपुत्राणां युद्धं स्वाभाविक एव धर्मः । तत्किमद्भुतं कृतं यदियं मम पूजा क्रियते । यदि पूजा कर्तव्या तर्हि चाचिकदेवस्य क्रियतां येन रिपुशिरोऽप्यानीय सत्यपक्षानुरोधेन भवतः पुरस्तान्मम यशः प्रख्यापितम् । अन्यथा नीयमानं रिपुमरणचिन्हं रिपुशिरो दृष्ट्वा को वार्ध्यगामष्यद्यन्मया मारितो रिपुरिति । तदयमेव प्रथमं पूज्यताम्। चाचिकदेव उवाच । कुमार नरसिंह, मैवं ब्रूहि । कथमहं त्वदीयं पराक्रमफलमादाय परोच्छिष्टजीवी भविष्यामि। नरसिंहदेव उवाच । साधु सत्यवीर साधु ।

अनेन तव सत्येन सर्वमेवोचितं तव ॥
महेच्छोऽसि विदग्धोऽसि सतीपुत्रोऽसि चाचिक ॥ १ ॥

ततस्तयोः कुमारयोः परस्परालापमाकर्णयता समुपजातपरितोषेण यवनराजेन द्वावपि कुमारौ तुल्यमेव सत्कृतौ ।

पुरुषपरीक्षा.

२७

## मेधाविकथा.

सकृदुक्तं च गृण्हाति न च विस्मरति श्रुतम् ॥
धीर्धारणावती यस्य मेधावी स इहोच्यते ॥ १ ॥

बभूव गौडविषये श्रीहर्षो नाम कविपण्डितः। स च नलचरिताभिधानं काव्यं कृत्वा परामृष्टवान्। यत्—

रसवन्मानसग्राहि गुणालङ्कारसंयुतम्॥
कवीनां यशसे काव्यं हास्यायान्यच्च जायते॥ १॥
अग्नौ परीक्ष्यते स्वर्णं काव्यं सदसि तद्विदाम्॥
किं कवेस्तस्य काव्येन सद्भिर्यन्नानुगृह्यते॥ २॥

ततस्तत्काव्यं दर्शयितुं पण्डितमण्डलीमुद्दिश्य वाराणसीं जगाम। तत्र च कोकनामानं पण्डितं श्रावयामास। कोकस्तु संसारसुखविरक्तः प्रतिक्षणं समाधौ तिष्ठति। यदा मध्याह्नसमये मणिकर्णिमायां स्नानार्थं गच्छति तदा गच्छन्नेवाकर्णयति। श्रीहर्षस्तु तमनुगच्छन्पठति प्रत्यहम्। तदुत्तरं किमपि न प्राप्नोति। एकदा श्रीहर्षेणोक्तम् 'आर्य महाकाव्ये कृतश्रमोऽहं तत्परीक्षार्थं त्वामुद्दिश्य बुद्ध्या स्वदेशीयवात्सल्येन च महतो दूरादागतोऽस्मि। पथि गच्छतो भवतः पुरस्तात्सदसद्विवेकप्रत्याशया पठामि। भवान्न निन्दति न चाभिनन्दति। तन्मध्ये कर्णमेव नार्पयति। कोक उवाच। 'आः कथमहं कर्णं नार्पयामि? किं तु सम्पूर्णं श्रुत्वा शब्दार्थयोरूहापोहेन सन्दर्भशुद्धिं ज्ञात्वा विशेषं वक्ष्यामि। काव्यं तु मया कर्णे कृतं मनसि निर्द्धारितं च। यदि भवान्न प्रत्येति तदा शृणोतु।' ततो मासमाकर्णितानि पद्यानि पपाठ। तदाकर्ण्य साश्चर्यः सानन्दश्च श्रीहर्षस्तत्पादयोः पपात। श्रीहर्ष उवाच 'भोः कोकपण्डित परितुष्टोऽस्मि तव महत्वेन।' कोकपण्डितस्तस्य गुणान्प्रस्तुत्य दोषान्समाधाय विशेषानुद्बोध्य तं श्रीहर्षकविराजं हृष्टमनसं कृत्वा गृहं प्रस्थापयामास। तथाहि—

वस्तुदोषमनादृत्य गुणांश्चिन्वन्ति तद्विदः ॥
अपि कण्टकिनः पुष्पे गन्धं जिघ्रन्ति षट्पदाः॥ ४ ॥

पुरुषपरीक्षा.

## २८.

## श्री रामार्याः

पितरौ यत्र विभिन्नौ तत्रान्यतरेण जीवनं हि शिशोः ॥
उभयं त्वमेव मेऽतस्त्वयि निष्करुणे करोमि किं राम ॥१॥
न शृणोषि दीनभाषामिति सर्वज्ञे न शक्यते वक्तुम्॥
श्रुत्वा स्थितोऽसि तूष्णींमित्यपि वचनं दयानिधौ निन्द्यम्॥ २ ॥
किं वा तद्गुरुकार्यं यद्व्यासङ्गेन जानकीजाने॥
दीनानि मे वचांसि प्रकटं नायान्ति कर्णमार्गं ते॥ ३ ॥
प्रायो राक्षसयुद्धे श्रान्तः शेषेऽनिशं सुखं शेषे ॥
यज्जल्पतो भृशं मे करुणानि वचांसि नावधारयसि॥ ४ ॥
अपि दलति वज्रहृदयं मद्वचनै रोदितीव पाषाणः॥
किंवा मयापराद्धं यत्करुणाब्धिर्भवानुदासीनः ॥ ५ ॥
जल्पन्तमल्पबुद्धिं पश्यन्तस्त्वत्कृपामपश्यन्तः॥
मामुपहसन्ति लोकाः शोकारे तत्तवाश्लाध्यम्॥ ६ ॥
क्षीरेण दग्धजिव्हस्तक्रं फूत्कृत्य बालकः पिबति ॥
दम्भिनमवलोक्य जनस्तद्वन्मां शङ्कते त्वया त्यक्तम् ॥ ७ ॥
मयि करुणामृदुभावाद्यदि नाभीष्टं करोषि मा कुरु तत् ॥
स्वामिभावमीश स्वीयं प्रकटीकुरुष्व दाशरथे ॥ ८ ॥

पायस इव राम सर्पिर्भस्मनि निहितं करोति किं नाम ॥
तद्वत्तव मन्त्रजपः पापिनि मयि किं करोतु वाभीष्टम् ॥ ९ ॥
सन्तप्तायसपिण्डे वार्यपि भस्मीभवत्युपक्षिप्तम् ॥
नित्याशौचे तद्वन्मयि मंत्रजपो ऽपि भस्मसाद्भवति ॥ १० ॥
मालिन्यदोषभीत्या पृथग्विधेयं तु माषराशेः किम् ॥
मत्तः शरीरपापात्पापं किंवा जपः करोतु पृथक् ॥ ११ ॥
कुरु मा साहसमित्थं जल्पन्पक्षी भिनत्ति पाषाणम् ॥
तद्वत्सहजैर्दोषैः पापं निन्दामि राम कुर्वे च ॥ १२ ॥
मृगमदभूमौ जनितो जहाति दोषं निजं पलाण्डुः किम् ॥
तद्वत्तव दासोऽहं त्यजामि दोषं न जानु देवेश ॥ १३ ॥
सुकृतिन ईषत्पापे प्रायश्चित्तं रघूत्तमप्रोक्तम् ॥
अपयाति मामुदीक्ष्य प्रायस्तदपीह गौरिव व्याघ्रम् ॥ १४ ॥
परिगणना भगणानां भविता यदि वा समन्ततो ऽणूनाम् ॥
राघव पापचयानां न मत्कृतानां भवेदियं क्वचन ॥ १५ ॥

श्रीमुद्गलाचार्याः.

२९.

## नागेशोपाध्यायस्य किंवदन्ती.

अयं महाराष्ट्रब्राह्मणेषु प्रशस्ततमे महति कुले लब्धजनिः पित्रा तैस्तैः संस्कारैः संस्कृतो निपुणमतिरपि यथायथमकृताभ्यासोऽसभ्यैः सह सदा गोष्ठीसुखमनुभवन्यथेच्छाचारी यथाजातः आषोडशाद्वर्षात्काशीमधिवसति स्म। एकदा च कुलक्रमागतां पौरोहितीं वृत्तिमनुसृत्योपजीवन्देशान्तरागतस्वयमा-

नगृहे समुपस्थितायां सभायां धाष्टर्यान्महापण्डितप्ररोहक्षमे महत्यासने समुपविष्टः केनचिद्विदुषा निर्भर्त्सितो महतीं ग्लानिं प्राप्नुवन् ' विद्यया विहीनस्य मरणं वरम्' इति निश्चित्य ' वाग्देवीप्रसादाद्विद्यां लभेय तस्या बलितां वा' इति संकल्प्य वागीश्वरीसदने केनचिद्विदुषोपादिष्ट मत्रं जपन्कृतदेहत्यागनिश्चयतयानश्नत्कतिपयानहोरात्राननतिवाहयांश्चक्रे । ततः प्रादुर्भूतदयाया वागीश्वर्या लब्धसाक्षाद्दर्शनः, तत्कृपाकटाक्षामृतस्नातो लब्धमनोरथो भट्टोजीदीक्षितपौत्रपण्डितप्रवरहरिदीक्षिततो ऽधीतविद्यो विविधशास्त्रीयग्रन्थान्विरच्य महतीं प्रतिष्ठामवाप ।

श्रीवामनाचार्याः।

## ३०
## तुलाग्राहिकथा.

अपरे ऽन्हि सन्ध्यासमये गमनाय प्रभावती शुकं पृच्छाति स्म। शुकः प्राह —

व्रज देवि वरं यानं सर्वथा तव भामिनि ॥
वक्तुं चेद्विषमे वेत्सि तूलाग्राहीव भूधरः ॥ १ ॥

प्रभावती प्राह कथमेतत्?

कस्तुलाग्राहकः कीर गृहीताच तुला कुतः ॥
विषमं च किमायातं कथां कथय शोभनाम् ॥ २ ॥

अस्त्यत्र कुण्डिनं नाम नगरम् । तत्र भूधरो नाम वणिक्पुण्यक्षयात्क्षीण धनो जनैस्त्यक्तः। उक्तं च—

विद्वान्धनी धनी दाता धनी साधुर्गुणाग्रणीः ॥
सर्व बन्धुर्धनी पूज्यो धनहीनो गतप्रभः ॥ ३ ॥

यदा तु स तुलामात्रधनोऽभवत्तदान्यवणिग्गृहे तुलां मुक्त्वा देशान्तरं गतः। तत्र धनमर्जयित्वा निजनगरमागत्य तं वणिजं तुलां ययाचे। वणिक्पार्श्वात्तुला न लब्धा। तुलायां तु लुब्धो वणिङ्मूर्ख उत्तरं चक्रे। यत् 'त्वदीया तुला मूषकैर्भक्षिता' इति। तच्छ्रुत्वा भूधरस्तूष्णीं स्थितः। सचैकदा तस्य सद्मनि भोजनाय गतः। तत्र क्रीडन्तं बालकं दृष्ट्वा प्रच्छन्नं गृहीत्वा निजगृहं ययौ। बालकजनकस्तु दुःखपूरितान्तरङ्गो रुरोद सकुटुम्बः। तं च रुदन्तं दृष्ट्वा प्रतिवेशिमनमग्रे जगाद। 'रे त्वदीयसुतो भूधरेण गृहीतः।ततोऽसौ तद्गृहं गत्वा भूधरात्सुतं याचितवान्। भूधरेणोक्तं 'मित्र तव पुत्रो मया सह स्नानार्थे नदीतीरे गतस्तत्र श्येनेनापहृतः।' इति श्रुत्वा वणिजा राजकुले गत्वा पुत्रहरणवृत्तान्तो निवेदितः। भूधरोऽपि राजकुलं ययौ। तत्कथय स बालहर्ता कथं मुच्यतामिति प्रश्नः। शुकःप्राह। यदा भूधरो राजसमक्षं मन्त्रिणा पृष्टस्तदैवं जगाद—

तुलां लोहमयीं यत्र खादन्ते देव मूषकाः॥
गजं तत्र हरेच्छ्येनो दारके कोऽत्र विस्मयः॥ ४ ॥

तस्माच्छ्रुत्वा सकलमुदन्तजातं मन्त्रिणोक्तं 'यदायं धूर्तस्तव तुलां प्रत्यर्पयेत्तदा दारकोऽपि दातव्यो नान्यथा। ततस्तेन दारकः समर्पितः तुलाग्राही दण्डितः संस्तुलां समर्पयामास।

शुकसप्ततिः।

## ३१

## 'ससेमिरा' उपाख्यानम्।

आसीद्विशालायां नन्दो नाम नरेन्द्रः। स निजभुजबलेन सर्वानवनिपालान्विजित्य राज्यं शशास। तस्य भानुमती नाम भार्या। तस्यां स नितान्तमनु-

रक्तः पुरन्दरस्य बृहस्पतिरिव तस्यासीच्छारदानन्दो नामामात्यप्रवरः। सकदाचित्क्षुद्रकारणात्कुपितेन भूपतिना निजराज्यान्निर्वासितः। एकदा नृपनन्दनो जयपालो मृगयार्थं वनमगात्। तत्र च बहून्पशून्व्यापाद्य कंचन कृष्णासारं दृष्ट्वा तदनुगतो महदरण्यं प्रविष्टो यावत्पश्यति तावत्सकलः सैनिकगणो मार्गे लग्नः। कृष्णसारोऽपि तत्रादृश्यो जातः। एकाकी तुरगारूढः सरोवरस्य परिसरे वनमपश्यत्। तत्राश्वादवतीर्णो वृक्षशाखायामश्वं बद्ध्वा जलपानं विधाय यावद्वृक्षच्छायायां यावदुपविशति तावदतिकरालः कश्चिद्व्याघ्रः समागतः। तं दृष्ट्वा तुरङ्गमो बन्धनं त्रोटयित्वा पलायमानो नगरमार्गमगात्। नृपसूनुरपि भयाद्वेपमानः शाखामालम्ब्य तरुवरमारूढः। तत्र पूर्वारूढं भल्लूकं विलोक्य पुनर्भृशं भयं प्राप्तः। अथ भील्लुकोऽब्रवीत्। राजकुमार मा भैषीः। अद्य मम शरणागतस्त्वमतो नाहं किमपि तवानिष्टं करिष्यामि। मां विश्वस्य शार्दूलादपि न भेतव्यम्। नृपसूनुनोक्तं 'भो ऋक्षराज' अहं तव शरणागतः। विशेषतो भयाभिभूतः। अतः शरणागतपरित्राणान्महत्पुण्यं ते स्यात्। यतः—

एकतः क्रतवः सर्वे सहस्रवरदक्षिणाः॥
एकतो भयभीतानां प्राणिनां प्राणरक्षणम्॥ १॥

तदा भल्लेन समाश्वासितो राजसूनुः। द्वीप्यपि महीरुहतुलमागतः। ततस्तरणिरस्तमगात्। रात्रौ भृशं श्रान्तं भूपसुतं यावन्निद्रा समायाति तदा 'वृक्षाधः पतिष्यसि। एहि ममाङ्के निद्रां कुरु।' एवमुक्तवतो भल्लूकस्याङ्के सुष्वाप राजपुत्रः। तदा चित्रको ब्रूते 'भल्लूक, अयं ग्रामवासी पुनरपि मृगययास्मान्निहनिष्यति। शत्रुरयं किमर्थमङ्के निवेशितः। यतोऽयं मनुष्यो ऽतस्त्वयोपकृतेऽप्ययमपकारमेव करिष्यति। तस्मादमुमधः पातय। अहमेनं भक्षयित्वा सुखेन गमिष्यामि त्वमपि निजालयं याहि। ऋक्षेणोक्तं मम किमपि

भवतु परममुं मे शरणागतं नाहं पातयिष्यामि । यतः शरणागतमारणे महत्पातकम्। तथा हि—

विश्वास घातकाश्चैव शरणागतघातका:॥
वसन्ति नकरे घोरे यावदाभूतसम्प्लवम्॥ २ ॥

तदनन्तरं राजपुत्रो विनिद्रो जातः। भल्लूकेनोक्त भोराज कुमार, अहं क्षणं निद्रां करिष्यामि त्वमप्रमत्तास्तिष्ठ । तेनोक्तं तथा भवतु । ततो भल्लूको राजपुत्रसमीपे स्वापं गतः । तदा व्याघ्रेणोक्तं भो राजकुमार त्वमस्य विश्वासं माकुरु। यतोऽयं नखायुधः। उक्तञ्च—

नदीनां शस्त्रपाणीनां नखिनां शृङ्गिणां तथा ॥
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥ ३ ॥

अयं चञ्चलाचित्तो दृश्यते तस्मादस्य प्रसादोऽपि भयङ्करः। अयं त्वां मत्तो रक्षित्वा स्वयमत्तुमिच्छति। अतस्त्वममुं भल्लूकमधः पातय। अहमेनं भक्षयित्वा गमिष्यामि। त्वमपि निजनगरं गच्छ। तच्छ्रुत्वा राजपुत्रो यावत्तमधः पातयाति तावद्भल्लूको वृक्षात्पतन्नन्तरा शाखामन्यामवलम्बितवान्। पुनस्तं दृष्ट्वा राजपुत्रो भयमवाप। भल्लूकोऽप्यवदत्। ' भो पापिष्ठ किमर्थं विभेषि ? यत्पूर्वार्जितं-कर्म तत्त्वया भोक्तव्यमस्ति । अतस्तं ' ससेमिरा' इति वदन्पिशाचो भव। ' इति शापं दत्तवान्। ततः प्रभातमासीत् । व्याघ्रस्तस्मात्स्थानान्निर्गतः। भल्लूकोऽपि राजकुमारं शप्त्वा ।निजस्थानं जगाम।

३२

## ' ससेमिरा' उपाख्यानम्.

### द्वितीयोंऽशः

राजकुमारः ' ससेमिरा' इति प्रजल्पन्पिशाचो भूत्वा वनं परिभ्रमति स्म। तस्य तुरङ्गस्तेन शून्यो नगरं जगाम। जना अश्वं शून्यं दृष्ट्वा राजोऽग्रे केवल-

मागतं तुरङ्गमाचख्युः। ततो राजा मन्त्रिणमाहूय भणति स्म। यदा कुमारो मृगयार्थं निर्गतस्तदा महानपशकुन आसीत्। तमुल्लङ्घ्य निर्गतस्तस्य प्रत्ययो ज्ञातः। तेनारूढोऽश्वः शून्यः सन्वनादागतः। अतस्तदन्वेषणार्थं वनं गमिष्यामः। तेनोक्तं 'देव तथा कर्तव्यम्' ततो राजा मन्त्रिणा परिवारेण च सह येन मार्गेण स गतस्तेनैव मार्गेण वनं गतः। वनमध्ये परिभ्रमन्तं 'ससेमिरा' इतिवदन्तं पिशाचीभूतं दृष्ट्वा महाशोकसागरे निमग्नस्तमादाय स्वपुरमगमत्। मणिमन्त्रौषधिज्ञानाहूय तैश्चिकित्सितोऽपि स्वस्थो न बभूव। तस्मिन्नवसरे राजा मन्त्रिणमवदत्। 'भोमन्त्रिन्निदानीं शारदानन्दश्चेदतिष्ठ-त्तर्हि क्षणमात्रेणामुमचिकित्सत्। स मया मारितः। पुरुषेणयत्कार्यं तद्विचा-र्यैव कर्तव्यम्। तन्निरासस‌मये केनापि न वारितोऽहम्। मन्त्रिणोक्तं 'स समयस्तादृश एवासीत्'। यतो बुद्धिर्भवितव्यतानुसारिणी भवति। उक्तं च

आशा सम्पद्यते बुद्धिः सा मतिः सा च भावना॥
सहायास्तादृशा ज्ञेया यादृशी भवितव्यता॥ १॥
न हि भवति यन्नभाव्यं भवति च भाव्यं विनापि यत्नेन॥
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति॥ २॥

राज्ञोक्तं तत्कर्मानुसारेणाभूत्। इदानीमत्र महान्यत्नोऽनुष्ठेयः। मन्त्री पृच्छति कीदृशः सः। राजा ब्रूते। 'यः कश्चनैनं चिकित्सति स रा-ज्यार्धेन योक्ष्यते' इति घोषणा प्रदातव्या। मन्त्रिणापि तथा कारयित्वा स्वभवनमागत्य शारदानन्दाग्रे सर्वमपि वृत्तान्तमकथयत्। ततो राजा सकलमन्त्रिसमेत तत्सर्वं श्रुत्वा शारदानन्देन भणितम्। भो मन्त्रिन्राज्ञोऽग्रे कथय यन्मम कापि कन्या वर्तते तस्या दर्शनमस्य कार्यं सा कमप्युपायमस्य

करिष्यति। तच्छ्रुत्वा राज्ञः पुरतो मन्त्रिणा तथैव कथितम्। ततो राजामात्य-मण्डलपरिवृतो मन्त्रिमन्दिरमागत्योपविष्टः। तदा राजपुत्रोऽपि 'ससेमिरा' इति वदंस्तत्रोपविष्टः। तच्छ्रुत्वा जवनिकान्तःस्थितेन शारदानन्देनैतत्पद्यं पठितम्—

**स**द्भावप्रतिपन्नानां वञ्चने का विदग्धता ॥
अंकमारुह्य सुप्तानां हन्तुः किं नाम पौरुषम् ॥ ३ ॥

एतत्पद्यं श्रुत्वा राजपुत्रेण चतुर्णामक्षराणामादिममक्षरं परित्यक्तम्। पुनर्द्वितीयं पद्यमपठत्—

**से**तुं गत्वा समुद्रस्य गङ्गासागरसङ्गमम् ॥
ब्रह्महापि प्रमुच्येत मित्रद्रोही न मुच्यते ॥ ४ ॥

एतत्पद्यं श्रुत्वा द्वितीयमक्षरं विहाय केवलं 'मिरा' इति वर्णयुगुलं पपाठ। ततः शारदानन्देन तृतीयं पद्यं प्रोक्तम्।

**मि**त्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः ॥
त्रयस्ते नरकं यान्ति यावदाभूतसम्प्लवम् ॥ ४ ॥

तत एकमेवाक्षरमपठद्राजपुत्रः। पुनः शारदानन्देन चतुर्थः श्लोकः पठितः।

**रा**जेन्द्र तव पुत्रस्य यदि कल्याणमिच्छसि ॥
देहि दानं द्विजातिभ्यो देवताराधनं कुरु ॥ ६ ॥

एवमुक्तवति शारदानन्दे राजपुत्रः स्वस्थः सावधानश्चाभवत्। ततः पितुरग्रे भल्लूकवृत्तान्तमकथयत्। ततो राज्ञा जवनिकापकृष्टा। ततोपविष्टं शारदानन्दं विलोक्य नृपः परमया मुदा तं प्रणम्य स क्षमापनयाचनं सत्कृतवान्।

## ३३
## भोजस्य विक्रमसिंहासनप्राप्तिः ।

भोजराजो राज्यं प्राप्य प्रजा अपालयत् । तद्राज्ये कश्चिद्द्विजः क्षेत्र कृष्ट्वा यावनालानवपत् । तत्र महत्फलमभूत् । स ब्राह्मणः क्षेत्रस्यैककोणे कस्मिंश्चित्प्रोन्नते भूप्रदेशे पक्षिणामुत्थापनार्थं मञ्चं निर्मायोपविश्य सस्यविनाशकान्पक्षिणो वारयति । ततः कदाचिद्राजा भोजो विहर्तुं सकलराजकुमारैः परिवृतस्तत्क्षेत्रसमीपं यावदागच्छति तावन्मञ्चाधिष्ठितेन ब्राह्मणेनाभिहितः सः । 'हे राजेन्द्र' सम्यक्फलितमिदं क्षेत्रं ततः ससैन्यः समागत्य यथेच्छं भुज्यताम् । अश्वेभ्यश्चणका दीयन्ताम् । तवात्र समागमेन मज्जन्मसफलमभूत् । यतो भवान्ममातिथिर्जातः । ईदृशः प्रस्तावः कदा सम्पद्यते । तच्छ्रुत्वा स राजा सैन्यसमेतः क्षेत्रान्तः प्रविष्टः । अथ ब्राह्मणो मञ्चकादवरुह्य क्षेत्रमध्ये स्थितं राजानं भणति 'भो राजन्, किमयमधर्मः क्रियते । कथमिदं ब्राह्मणक्षेत्रं विनाश्यते त्वया! अपथगामिनोऽन्ये त्वया निवारणीयाः । अन्यविहितमन्याय्याचरणं तुभ्यमावेद्यते स स्वयमेव प्रजाविघाताय प्रवृत्तश्चेत्कस्त्वां निवारयिष्यति । भवान्धर्मशास्त्राभिज्ञश्च । ब्राह्मणद्रव्यं कथं नाशयति । ब्रह्मस्वमेतद्विषमं तथा हि—

न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ॥
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकान् ॥ १ ॥

इति तेनोक्तं श्रुत्वा राजा यावत्सपरिवारः क्षेत्राद्बहिर्निर्गच्छति तावत्पक्षिणः समुत्थाप्य पुनर्मञ्चमारूढो वदति ' भो राजन्, किमिति परावृत्तो भवान् । यावनालकदण्डान् खादय आस्वादयन्तु । उर्वारुकाणि सन्ति यथेच्छमुपभुज्यन्ताम् । ' पुनर्ब्राह्मणाभ्यर्थनमादृत्य सपरिजनः प्रविशति राजा तावद्भूसुरो द्विजनिर्यापणाय मञ्चादवरूढस्तथैवाब्रवीत् । ततो महीपश्चकितः

स्वमनसि विचारयति । ' अहो , आश्चर्यं यदायं ब्राह्मणो मञ्चमारोहति तदास्य मनसि दातव्यं भोक्तव्यमिति मतिरुत्पद्यते परं यदावरोहति तदास्य दैन्यमापद्यते । किन्वत्र बीजम् ' । तदहं मञ्चमारुह्य पश्यामी' ति मञ्चमारुरोह । भोजचेतसि तदैवं वासना प्रादुरभूत । ' विश्वस्यार्तिः परहरणीया सर्वस्य लोकस्य दारिद्र्यं निवारणीयम् । दुष्टा दण्डनीयाः । सज्जनाः पालनीयाः । प्रजा धर्मेण रक्षणीयाः । किं बहुना यदीदानींयः कश्चन शरीरमप्यभ्यर्थयेत्तर्हि तस्मै तदपि वित रिष्यामि । ' । आनंदपूर्णः पुनर्विमृशति नूनमेतत्केदारमेतस्यैवं धिषणां जनयति । उक्तञ्च—

' जले तैलं खले गुह्यं पात्रे दानं मनागपि ॥
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥ २ ॥

कथमेतत्क्षेत्रस्य माहात्म्यं कथं न्वेतल्लभ्येत । इति विचार्य ब्राह्मणमाकार्यापृच्छत् । ' भो ब्राह्मण तवैतस्मात्केदारात्कियांल्लाभो भवति ' । महीसुरेणोक्तं सकलकलाकुशलेन त्वया अविदितं किंचन नास्ति । यावानर्हति तावान्भवतैव निर्णीयताम् । राजा नाम साक्षाद्विष्णोरवतारभूतः । स यस्मिन्दृष्टिरारोपयति तस्य दैन्यदुर्भिक्षादयो नश्यन्ति । नृपो नाम साक्षात्सुरपादपः । स त्वं मे दृग्विषयोऽभूः । अद्य मम दैन्यदारिद्र्यादीनामवसानं जातम् । क्षेत्रमिति का मात्रा' । ततो राजा ब्राह्मणं धनधान्यादिना परितोष्य तत्क्षेत्रं गृहीत्वा मञ्चकाधः खानयितुं प्रारेभे । पुरुषप्रमाणे गर्ते संवृते तत्रैका सुरुचिरा शिला विलोकिता । तदधश्चन्द्रकान्तशिलानिर्मितं नानारत्नखचितं द्वात्रिंशत्पुत्तलिकाभिर्युतं नितान्तरमणीयमेकं सिंहासनं ददर्श , तद्विलोक्य भोजः परमानन्दकल्लोलितस्वान्तः सिंहासनं स्वराजधानीं नेतुं यावदुच्चालयति तावदधिकं गुरु भवति नोच्चलति च । अमात्येनोक्तं ' राजन्नेतत्सिंहासनं

दिव्यमपूर्वं च बलिहोमपूजादिकं विना नोच्चलिष्यति । तव साध्यं च न भविष्यति ।' तस्य वचनं श्रुत्वा राजा द्विजानाहूय तैः सर्वमपि विधानं कारितवान् । ततस्तात्सिहासनं लंघु भूत्वा स्वयमेवोच्चलति स्म । तद्दृष्ट्वा राजा मंत्रिणमुवाच । ' भो मंत्रिन् , एतत्सिंहासनं पूर्वं ममासाध्यमासीत् परमिदानीं तव बुद्धिप्रभावेण हस्तगतमभून्मे ' अहो बुद्धिमतां संसर्गो लाभाय सुखाय च सम्पद्यते ततो मन्त्रिणोक्तं ' भो राजन्यःस्वयं शेमुषीविधुरः परेषामुपदेशं न श्रुणोति स सर्वथा नश्यति । त्वं तु न तादृशः । धीमानपि नावधीरयसि ग्राह्यवचनान् । अतस्ते नास्ति सकले कार्यकलापे नान्तरायलेशः । राजाब्रवीत्—योऽनर्थान्निवारयति, आगाम्यर्थं साधयति स एव मन्त्री । तथा चोक्तम्—

स्थितस्य कार्यस्य समुद्भवार्थं—
मागामिनोऽर्थस्यच सम्भवार्थम् ॥
अनर्थकार्ये प्रतिघातनार्थं
यो मन्त्रयतेऽसौ परमो हि मन्त्री ॥ ३ ॥

द्वात्रिंशत्पुत्तलिकाः

३४

## सिंहान्योक्तयः

एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः ॥
स्वप्नेऽप्येवं विधा चिन्ता मृगेन्द्रस्य न जायते ॥ १ ॥
मृगेन्द्रं वा मृगारिं वा द्वयं व्याहरतां जनः ॥
तस्य द्वयमपि व्रीडा क्रीडादलित दन्तिनः ॥ २ ॥

मृगेभ्यो रक्ष्यते क्षेत्रं नरैस्तृणमयैरपि ॥
सिंहाक्रान्तं पुनर्मूढ न हयैर्न च दन्तिभिः ॥ ३ ॥
मृगैर्नष्टं शशैर्लीनं वराहैर्वलितं रुषा ॥
हयानां हेषितं श्रुत्वा सिंहैः पूर्ववदासितम् ॥४ ॥
एकाकिनि वनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे ॥
सत्वोत्कटे मृगपतौ राजेति गिरः परिणमन्ति ॥ ५ ॥
अनिशं मतङ्गजानां बृंहितमाकर्ण्यते यथा विपिने ॥
मन्ये तथा न जीवति गजेन्द्रपलकवलनः सिंहः ॥ ६ ॥
जीर्णोऽपि क्रमहीनोऽपि कृशोऽपि यदि केसरी ॥
तथापि यूथनाथस्य शङ्कातङ्काय कल्पते ॥ ७ ॥
खनन्नाखुविलं सिंहः पाषाण शकलाकुलम् ॥
प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥ ८ ॥
नास्योच्छ्रायवती तनुर्न दशनौ नो दीर्घदीर्घः करः
सत्यं वारण नैष केसरिशिशुस्त्वाऽम्बरैः स्पर्धते ॥
तेजोवीजमजेयमस्य हृदये न्यस्तं पुनर्वेधसा
तादृक्तादृशमेव येन सुतरां भोज्यं पशुं मन्यते ॥ ९ ॥

शार्ङ्गधरपद्धतेः

३५

## विक्रमवैतालिकसंवादः

आसीदुज्जयिनी नाम राजधानी । तस्यां विक्रमादित्यनामा राजा बभूव । सचैकदा केनापि वैतालिकेन पठ्यमानं श्लोकमेकं शुश्राव । तद्यथा--

विप्रैः सन्तुष्टचित्तैः प्रमुदितहृदयैर्बन्दिभिर्लब्धकामै—
र्भृत्यैः सिद्धाभिलाषैर्दिगवनिपतिभिर्वश्यतामाश्रयद्भिः ॥
विद्वत्सार्थैः कृतार्थैर्दिशि सुभटैः काञ्चनाभ्यर्च्य मानै—
र्नित्यं संस्तूयमानः सजयति नृपतिर्दानवीरो बडाहः ॥ १ ॥

ततो राजा पठन्तं वैतालिकमब्रवीत् । रे रे वैतालिक कस्तव नृपतिर्बडाहः । केन दर्पेण मम पुरतस्तस्योत्कर्षं प्रस्तौषि । वैतालिक उवाच । मम वृत्तिरियं वैतालिकस्य । यद्वीराणां यशः परितः प्रस्तूयते । तथाहि—

शूरान्निबोधयति बोधयति प्रमत्तान्
कौत्स्यं विमोचयति कापुरुषान्वचोभिः ॥
ब्रूते विपक्षवचनं पुरतो नृपाणां
वैतालिकः कृपणतां नृपते न याति ॥ २ ॥

अत एव मामर्थैः शूराः परितोषयन्ति । अहं तु तेषामङ्कुरितं यशः प्रतिदिशं पल्लवयामि । देवो यदि तदाकर्णनेन सामर्षस्तदा तदधिकं तद्रूपं वा पौरुषं वितनोतु कुप्यति कुतः ? राजोवाच । किं तत्पौरुषम् ? वैतालिकः कथयति देव तस्य बडाहनाम्नो भूमिपतेर्द्वारि प्रतिरात्र्येकं सुवर्णायतनमुत्पद्यते । प्रतिदिनं तच्छेदयित्वा स राजा सुवर्णानि ब्राह्मणेभ्यो दरिद्रेभ्यश्च वितरांति । तद्दानपरितुष्टास्ते सर्वत्र तस्य कीर्तिगाथां गायन्ति । राजोवाच । वैतालिक सत्यमेतत् । राजन्नतथं कः कथयति ? यदि मदुक्तं न प्रत्येति तदा स्वकीयेन चारपुरुषेण निरूपयतु । राजोवाच ।'वैतालिक यावदेतन्निरूपयामि तावत्त्वमिहैव नगरे तिष्ठ । यदि तथ्यवाग्भविष्यासि तदा रत्नैस्त्वां पूजयिष्यामि' इत्यभिधाय वैतालिकं बहिः प्राहिणोत् । राजा चान्तःपुरं गत्वा रहस्य

चिन्तयत् । 'अहो महदाश्चर्यं बडाह'चरितम् अथवा धातुः प्रपञ्चे किमसंभाव्यम् तत्पश्यामि गत्वा कौतुहलमिदम् ।' इति परामृश्य राज्यधुरं सचिवे सन्निवेश्याग्निकोकिलनामानौ वेतालावाहूय तयोःस्कन्धमारुह्य जगाम बडाहस्य राजधानीम् ।

पुरुषपरीक्षा.

( ३६ )

## बडाहस्य वरप्राप्तिः

तत्र च सुभटवेषधारी राज्ञो बडाहस्य दर्शनं कृत्वाब्रवीत् । 'देव, अनन्यसमसहायस्य श्रीविक्रमादित्यस्य दौवारिकोऽहम् । भवतः कीर्तिमाकर्ण्य सेवितुमागतोऽस्मि' इत्यभिधाय प्रणनाम । राजोवाच हे दौवारिक, महतो महीपालस्य दौवारिकोऽसि । तन्ममापि द्वारदेशमधितिष्ठ ।' ततो विक्रमादित्योऽपि द्वारि तिष्ठन्परमाद्भुतं प्रत्यहमुत्पद्यमानं सुवर्णायतनं तद्वितरणं चापश्यत् । ततश्चिन्तयामास । कुत एवास्य सुवर्णायतनं कुतो मम नास्ति ? पुरुषार्थाधीने व्यापारे पुरुषेण नोदासितव्यम् । कारणमत्र निरूपयितुं युज्यते । ततस्तत्कारणजिज्ञासुस्तत्कारणं निरूपयामास । एकदा रात्रौ महानिशाभागे सकलेषु पौरजनेषु राजपरिजनेषुच प्रसुप्तेषु प्रासादादेकाकिनं निस्सरन्तं नगराच्च बहिर्भवन्तं बडाहराजानं ददर्श । दृष्ट्वा च निभृतक्रमेण तेनानुपलक्षितस्तदनुगमनपरायणो बभूव । बडाहस्तु नृत्यद्वेतालपदास्फालनसाशङ्कडाकिनीडमरुडात्कारफेरवीसहस्रफेत्कारसरभसराक्षसक्रीडाकुलितं नरकपालभारचिताङ्गारचित्रितं परमभयानकं श्मशानमाससाद । तत्रचनद्यां कृतस्नानो भैरवपुरुषैर्नरचर्मरज्जुभिर्बद्धः प्रज्वलानलसन्तप्ततैलपूर्णे कटाहे निक्षिप्तश्च । स तत्र महतीं वेदनामनुभवन्महता कष्टेन प्राणांस्तत्याज । तस्य च त्यक्तप्राणस्य

तैलघृतसिद्धानि मांसानि भगवत्या चामुण्डया खादितानि । भक्षितमांसा भगवती परितुष्टा तदस्थीन्यमृतेन सिक्त्वा तं पुनस्तथैव ससर्ज । सृष्टो वडाहः पुनरुत्थाय भगवतीं प्रणनाम वरं च वव्रे । हे भगवति, वदान्यतया सम्भावितस्य पुरुषस्यार्थिजनमनोरथपूरणाशक्तिर्मरणादप्यतिरिच्यते । ततोऽहं मरणमङ्गीकृत्य याजनकजनवाँछापूरणकामो निजमांसैर्भगवतीमर्चितवानस्मि । मातः पूरय मे कामनाम् । देव्युवाच 'वडाह कृतार्थोऽसि । निजभवनद्वारि सुवर्णायतनं भविष्यति' इत्युक्त्वा-विरराम। ततो वरं लब्ध्वा प्रत्यावृत्तो वडाहः कृतार्थो निजमगारमाजगाम ।

पुरुषपरीक्षा.

३७

## विक्रमादित्यसाहसम्.

विक्रमादित्यस्तत्सकलं विलोक्य चिन्तयामास । 'सत्यंकथितं वैतालिकेन । दानवीर एवायं बडाहः। यतः प्रत्यहं प्राणपरिवर्तेन धनमर्जयति । भगवती करुणावत्यपि कथमेकेनैव प्राणपरित्यागसाहसेन कृतार्थं न कुरुते । भवतु तावत् । अग्रिमनिशायां यदुचितं तत्करिष्यामि' इति परामृश्य राजद्वारं गत्वा निजाधिकारमलञ्चकार । तदग्रिमनिशायां तु सचिवसामन्तभृत्यपरिवारितो वडाहो यावदेकान्तमपेक्षते तावदप्रसुप्तेष्वेषु नगरलोकेषु निःपरिजनो विक्रमादित्यः प्रदोषे एतं प्रदेशं गतः । तस्यां नद्यां स्नात्वा तस्मिन्नेव तैलपूर्णे कटाहे झम्पमकरोत् । आर्द्रमांसयोगात्तप्ततैलकटकटाशब्देन भगवत्या तत्रागत्य तन्मांसानि खादितानि । तदस्थीन्यमृतेन सिक्तानि । ततः पुनरुत्थितं विक्रमादित्यं बडाहभ्रमेण वरेण यावद्भगवती तमनुगृहीतुमिच्छति तावद्नेन कटाहे पुनर्झम्पः कृतः । पुनश्च भगवत्या तन्मांसानि खादितानि ।

एवं पुनर्जीवितः पुनः पुनः कृतज्ञम्पः सात्त्विकस्वभावाद्विक्रमादित्योऽयमिति लक्षितो भाषितश्च भगवत्या । श्रीदेव्युवाच । ' रे विक्रमादित्य, त्वय्यहं परितुष्टास्मि । ततो लब्धाष्टसिद्धिरपि किमर्थमेतत्साहसं करोषीति परीक्षमाणा कृत्रिमां बुभुक्षां तृप्तिं च दर्शयामि। संप्रति तव साहसेन तृप्तास्मि । वरं वृणु ।' ततो विक्रमादित्यः प्रणम्य वरं वव्रे । विक्रमादित्य उवाच । ' देवि भक्तवत्सलासि। जगन्मातर्वडाहे कृपार्थमहं त्वामाराधितवानस्मि । ततो विना मरणसाहसेन प्रत्यहं वडाहस्य द्वारि सुवर्णायतनमुत्पाद्यताम् ।' भगवती ' तथा भवतु ' इति वरं दत्वा स्वयमन्तर्बभूव । वरमभिलषितं लब्ध्वा विक्रमादित्यः स्वं राज्यं जगाम । यथार्थवचनं वैतालिकमाहूय रत्नैस्तुरगैर्वासोभिर्वारणैश्च पूजयामास ।

बडाहस्तु सुप्तेषु नगरजनेषु निर्गतो निशायां यदा श्मशानदेशं गतस्तदा न किमपि दृष्टवान् । किन्त्वाकाशवाचं शुश्राव । ' अरे बडाह, विक्रमादित्यस्तव खेदमपनीतवान् ।' इत्यनिर्धारितार्थामेव वाचं प्रत्याकलय्य ' किमर्थिभ्यो दास्यामि ' इति चिन्ताऽव्याकुलितः परावृत्य गृहं गतोऽपि पर्यङ्कशयने निद्रां न लेभे । तत्र जाग्रदेव प्रतरागत्य दौवारिकैः प्रतिबोधितः सौवर्णायतनं पूर्ववदेव द्वारि दृष्ट्वा कृतार्थो बभूव । आकाशसरस्वत्या अर्थं प्रकरणबलेन ज्ञातवान् । विक्रमादित्यप्रसादान्मम पुनर्मरणायासनिरपेक्षेयं सिद्धिर्जातेति निर्द्धारितमप्यर्थं तस्य हृदि वैतालिकः समागत्य पुनरुक्तं चकार ।

तथाहि—

पुंसां प्रथममुल्लेख्यो राजा विक्रमकेसरी ॥
कल्प्यते कल्पवल्लीव दानवीरेऽपि यद्दया ॥ १ ॥

पुरुषपरीक्षा.

## ( ३८ )

## स्यमन्तकोपाख्यानम्.

यदुकुले अनमित्रान्निघ्नो निघ्नस्य प्रसेनसत्राजितौ पुत्रौ बभूवतुः। तस्य सत्राजितस्य सूर्यः सखाभवत्। एकदा त्वम्भोधेस्तीरसंश्रयः सूर्यं सत्राजितस्तुष्टाव। तन्मनस्कतया च भास्वानभिष्टूयमानोऽग्रतस्तस्य तस्थौ। अस्पष्टमूर्तिधरं चैनमालोक्य सत्राजितः सूर्यमाह 'यथैव व्योम्नि वह्निपिण्डोपममहमपश्यं तथैवाद्याग्रतो गतमप्यत्र न किञ्चिद्भगवता प्रसादीकृतं विशेषमुपलक्षयामि।' इत्येवमुक्ते सूर्येण निजकण्ठादुन्मुच्य स्यमन्तकनामा मणिरवतार्य एकान्ते न्यस्तस्तमाताम्रोज्ज्वलस्ववपुषमीषदापिङ्गलनयनमादित्यमद्राक्षीत्। कृतप्रणिपातस्तवादिकं च सत्राजितमाह भगवान्वरमस्मत्तोऽभिमतं वृणीष्वेति स च तदेव मणिरत्नमयाचत। सचापि तस्मै तद्दत्वा वियति स्वधिष्ण्यमारुरोह। सत्राजिदप्यमलमणिरत्नसनाथकण्ठतया सूर्य इव तेजोभिरशेषदिगन्तराण्युद्भासयन्द्वारकां विवेश। द्वारकावासिजनपदस्तु तमायान्तमवेक्ष्य भगवन्तमनादिपुरुषं पुरुषोत्तममवनिभारावतरणायांशेन मानुषरूपधारिणं प्रणिपत्याह। भगवन्भवन्तमयं नूनं द्रष्टुमायात्यादित्यः। इत्याकर्ण्य प्रहस्य च तानाह भगवान्। 'नायमादित्यः। सत्राजितोऽयमादित्यदत्तं स्यमन्तकाख्यं महामणिं बिभ्रदत्रोपयाति। तदेनं विश्रब्धाः पश्यतेत्युक्तास्ते ययुः। स च तं स्यमन्तकाख्यं महामणिमात्मनो निविशने चक्रे। प्रतिदिनं तद्रत्नप्रवरमष्टौ कनकभारान्स्रवति। तत्प्रभावाच्च सकलस्यैव राष्ट्रस्योपसर्गा वृष्ट्यव्यालाग्निचोरदुर्भिक्षादिभयं न भवति। अच्युतोऽपि तद्रत्नमुग्रसेनस्य भूपतेर्योग्यमेतदिति लिप्सां चक्रे। गोत्रभेदभयाच्च शक्तोऽपि न जहार। सत्राजितोऽप्यच्युतो मामेनं याचियिष्यति, इत्यवगतरत्नलोभः स्वभ्रात्रे प्रसेनाय तद्रत्नं दत्तवान्।

तच्च शुचिना ध्रियमाणमशेषसुवर्णस्रावादिकं गुणमुत्पादयति । अन्यथा य एव धारयति तमेव हन्तीत्यसावपि प्रसेनः स्यमन्तकेन कण्ठसक्तेनाश्वमारुह्याटव्यां मृगयामगच्छत् । तत्र च सिंहाद्वधमवाप । साश्वं च तं निहत्य सिंहोऽप्यमलमणिरत्नमास्येनादाय गन्तुमुद्यत ऋक्षपतिना जाम्बवता दृष्टो घातितः । जाम्बवानप्यमलं तन्मणिरत्नमादाय स्वबिले प्रविवेश । सुकुमारकसंज्ञाय बालकाय च क्रीडनमकरोत् । अनागच्छति च तस्मिन्प्रसेने कृष्णो मणिरत्नमभिलषितवान् । न च प्राप्तवान्नूनमेतदस्य कर्मेत्यखिल एव यदुलोकः परस्परं कर्णाकर्ण्यकथयत् । विदितलोकापवादवृत्तान्तश्च भगवान्यदुसैन्यपरिवारः प्रसेनाश्वपदवीमनुससार । ददर्श चाश्वसमेतं प्रसेनं निहतं सिंहेन । अखिलजनपदमध्ये सिंहपददर्शनकृतपरिशुद्धिः सिंहपदमनुससार । ऋक्षविनिहतं सिंहमप्यल्पे भूमिभागे दृष्ट्वा ततश्च तद्रत्नगौरवादृक्षस्यापि पदान्यनुययौ । गिरितटे च सकलमेव यदुसैन्यमवस्थाप्य तत्पदानुसारी ऋक्षबिलं प्रविवेश । अर्धप्रविष्टश्च धात्र्याः सुकुमारकमुल्लापयन्त्या वाणीं शुश्राव—

सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ॥
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥ १ ॥

इत्याकर्ण्य लब्धस्यमन्तकोदन्तः प्रविष्टः कुमारक्रीडनकीकृतं च धात्रेयीहस्ते तेजोभिर्जाज्वल्यमानं स्यमन्तकं ददर्श । तं च स्यमन्तकाभिलाषचक्षुषमपूर्वं पुरुषमागतमवेक्ष्य धात्री 'त्राहि त्राहि' इति व्याजहार । तदार्तनादश्रवणानन्तरं चामर्षपूर्णहृदयस्तरक्षुः स जाम्बवानाजगाम । तयोश्च परस्परं युध्यतोर्द्वयोर्युद्धमेकविंशतिदिनान्यभवत् । ते च यदुसैनिकास्तत्र सप्ताष्टदिनानि तन्निष्क्रान्तिमुदीक्षमाणा अनिष्क्रममाणे च मधुरिपावसाववश्यमत्र बिलेऽ-

त्यंन्तंनाशमाप्तो भविष्यत्यन्यथा तस्य कथमेतावान्ति दिनानि शत्रुजये व्याक्षेपो भंवतीतिकृताध्यवसाया द्वारकामागता हतः कृष्ण इति कथयामासुः। तद्बान्धवाश्च तत्कालोचितमखिलमुपरतक्रियाकलापं चक्रुः। तत्र चास्य युध्यमानस्यातिश्रद्धादत्तविशिष्टपात्रोपयुक्तान्नतोयादिना कृष्णस्य बलप्राणपुष्टिरभूत्। इतरस्यानुदिनमतिगुरुपुरुषभिद्यमानस्यातिनिष्ठरप्रहारपीडिताखिलावयवस्य निराहारतया च बलहानिः।

विष्णुपुराणम्.

( ३९ )

## स्यमन्तकोपाख्यानम् ( द्वितीयोंऽशः )

निर्जितश्च भगवता जाम्बवान्प्रणिपत्याह। असुरसुरयक्षगन्धर्वराक्षसादिभिरप्यखिलैर्भगवान्न जेतुं शक्यः। किमुतावनिगोचरैरल्पवीर्यैर्नरावयवभूतैश्च तिर्यग्योन्यनुसृतिभिः किं पुनरस्मद्विधैरवश्यं भगवतोऽस्मत्स्वामिनो नारायणस्य सकलजगत्परायणस्यांशेन भवता भवितव्यम्। इत्युक्तस्तस्मै भगवानाखिलभारावतारमाचचक्षे। प्रीत्या निजकरतलस्पर्शेन चैनमपगतयुद्धखेदं चकार। स च प्रणिपत्यैनं पुनरपि प्रसाद्य जाम्बवतीं नाम कन्यां गृहागमनार्थभूतां ग्राहयामास। स्यमन्तकमणिमप्यसौ प्रणिपत्य तस्मै प्रददौ। अच्युतोऽप्यतिप्रणतात्तस्मादग्राह्यमपि तन्मणिरत्नमात्मशोधनाय जग्राह। सह जाम्बवत्या द्वारकामाजगाम भगवदागमनोद्भूतहर्षोत्कर्षस्य द्वारकावासिजनस्य कृष्णावलोकनात्तत्क्षणमेवातिपरिणतवयसोऽपि नवयौवनमिवाभवत्। आनकदुन्दुभिं च दिष्ट्या दिष्ट्येति च सकलयादवाः स्त्रियश्च सभाजयामासुः। भगवानपि यथानुभूतमशेषयादवसमाजे यथावदाचचक्षे। स्यमन्तकं च सत्राजिताय दत्वा मिथ्याभिशस्तविशुद्धिमवाप। जाम्बवतीं चान्तःपुरे निवेशयामास। सत्राजितोऽपि

मयास्याभूतमलिनमारोपितामिति जातसन्त्रासः स्वसुतां सत्यभामां भगवते भार्यां ददौ। तां चाक्रूरकृतवर्मशतधन्वप्रमुखा यादवाः पूर्वं वरयामासुः। ततस्तत्प्रदानादवज्ञातमात्मानं मन्यमानाः सत्राजिते वैरानुबन्धं चक्रुः। अक्रूरकृतवर्मप्रमुखाश्च शतधन्वानमूचुः। अयमतिदुरात्मा सत्राजितो योऽस्माभिर्भवताचाभ्यर्थितोऽप्यात्मजामस्मान्भवन्तं चाविगणय्य कृष्णाय दत्तवांस्तदलमनेन जीवता। घातयित्वैनं तन्महारत्नं त्वया किं न गृह्यते वयमप्यभ्युपपत्स्यामो यद्यप्यच्युतस्तवापि वैरानुबन्धं करिष्यति। एवमुक्तस्तथेत्यसावाह। जतुगृहदग्धानां च पाण्डुनन्दनानां विदितपरमार्थोऽपि भगवान्दुर्योधनप्रयत्नशैथिल्यार्थं कुल्यकरणाय वारणावतं गतः। गते च तस्मिन्सुप्तमेव सत्राजितं शतधन्वा जघान, मणिरत्नं चाददे। पितृवधामर्षपूर्णा च सत्यभामा शीघ्रं स्यन्दनारूढा वारणावतं गत्वा भगवतेऽहं प्रतिपादितेत्यक्षान्तिमता शतधन्वनास्मत्पिता व्यापादितः। तच्च स्यमन्तकमणिरत्नमपहृतं। तदियमस्यावहासना। तदालोच्य यदत्र युक्तं तत्क्रियतामिति कृष्णमाह। तया चैवमुक्तः परितुष्टान्तःकरणोऽपि कृष्णः सत्यभामामर्षताम्रलोचनः प्राह। सत्ये ममैषावहासना। नाहमेतां तस्य दुरात्मनः सहिष्ये। न ह्यनुल्लङ्घ्य वरपादपं तत्कृतनीडाश्रयिणो विहङ्गा वध्यन्ते। तदलमत्यर्थममुनास्मत्पुरतः शोकप्रेरितवाक्यपरिकरेणेत्युक्त्वा द्वारकामभ्येत्य बलमेकान्ते वासुदेवः प्राह। मृगयागतं प्रसेनमटव्यां मृगपतिर्जघान। सत्राजितोऽप्यधुना शतधन्वना निधनं प्रापितः। तदुभयविनाशात्तन्मणिरत्नमावाभ्यां सामान्यं भविष्यति। तदुत्तिष्ठारुह्यतां रथः। शतधनुर्निधनायोद्यमं कुर्वित्यभिहितस्तथेति समन्विच्छितवान्। कृतोद्योगौ चैतावुपलभ्य शतधन्वा कृतवर्माणमुपेत्य पार्ष्णिपूरककर्मनिमित्तमचोदयत्। आह चैनं कृतवर्मा। नाहं बलभद्रवासुदेवाभ्यां सह विरोधायालमित्युक्तश्चाक्रूरमचोदयत्।

आह चासावपि। न हि कश्चिद्भगवता पादप्रहारपरिकम्पितजगत्त्रयेणासुरवनितावैधव्यकारिणा प्रबलरिपुचक्राप्रतिहतचक्रेण चक्रिणा मदमुदितनयनावलोकिताखिलविशातनेनातिगुरुवैरिवारणाकर्षणाविष्कृतमहिमोरुसीरेण सीरिणा च सह सकलजगद्वन्द्यानाममराणामपि योद्धुं समर्थः। किमुताहं। तदन्यतः शरणमभिलष्यताम्। इत्युक्तः शतधनुराह। यद्यस्मत्परित्राणासमर्थं भवानात्मानमवगच्छति तदयमस्मन्मणिः सङ्गृह्य रक्ष्यतामित्युक्तः सोऽप्याह। यद्यन्तायामप्यवस्थायां भवान्कस्मैचिन्न कथयिष्यति तदहमेनं ग्रहीष्यामि। तथेत्युक्तेऽक्रूरस्तन्मणिरत्नं जग्राह। शतधनुरप्यतुलवेगां शतयोजनवाहिनीं वडवामारुह्यापक्रान्तः शैब्यसुग्रीवमेघपुष्पबलाहकाश्वचतुष्टययुक्तरथावस्थितौ बलदेववासुदेवौ तमनुप्रयातौ। सा च वडवा शतयोजनप्रमाणं मार्गमतीत्य पुनरपि वाह्यमाना मिथिलावनोद्देशे प्राणानुत्ससर्ज। शतधनुरपि तां परित्यज्य पदातिरेवाद्रवत्। कृष्णोऽपि बलभद्रमाह। तावदत्रैव स्यन्दने भवता स्थेयमहमेनमधमाचारं पदातिनमनुगम्य यावद्घातयामि। अत्र हि भूभागे दृष्टदोषा हयाः। नैतेश्वा भवतेमं भूमिभागमुल्लङ्घ्य नेयाः। तथेत्युक्तो बलभद्रो रथ एव तस्थौ। कृष्णोऽपि द्विक्रोशमात्रं भूमिभागमनुसृत्य दूरस्थस्यैव चक्रं क्षिप्त्वा शतधनुषः शिरश्चिच्छेद। तच्छरीराम्बरादिषु बहुप्रकारमन्विष्यन्नपि स्यमन्तकमणिं नावाप यदा तदोपगम्य बलभद्रमाह वृथैवास्माभिर्घातितः शतधनुर्न प्राप्तमखिलजगत्सारभूतमणिरत्नमित्याकर्ण्योद्भूतकोपो बलभद्रो वासुदेवमाह धिक्त्वां यस्त्वमर्थलिप्सुः। तदयं पन्थाः स्वेच्छया गम्यताम्। न मे द्वारकया न बन्धुभिः कार्यम्। अलमेभिर्ममाग्रतोऽलीकशपथैः। इत्याक्षिप्य तं कथञ्चित्प्रसाद्यमानोऽपि न तस्थौ। विदेहपुरीं प्रविवेश। जनकश्चार्घपूर्वकमेवैनं गृहं प्रवेशयामास। तत्रैव च तस्थौ। वासुदेवोऽपि द्वारकामाजगाम यावच्च जनकराजगृहे बलभद्रोऽवतस्थे तावद्धार्तराष्ट्रो दुर्योधनस्तत्सकाशाद्गदाशिक्षाममशिक्षत्।

श्रीविष्णुपुराणे.

( ४० )

## तृष्णानिन्दा

वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ॥
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ १ ॥
तृष्णे देवि नमस्तुभ्यं धैर्यविप्लवकारिणि ॥
विष्णुस्त्रैलोक्यनाथोऽपि यत्त्वया वामनीकृतः ॥ २ ॥
भ्रान्तं याचनतत्परेण मनसा देहीति वाक्प्रेरिता ॥
भुक्तं मानविवर्जितं परगृहे साशङ्कया ध्वांक्षवत् ॥
साक्षेपं भ्रुकुटीकटाक्षटकुटिलं दृष्टं खलानां मुखम् ॥
तृष्णे देवि यदन्यदिच्छसि पुनस्तत्रापि सज्जा वयम् ॥ ३ ॥
नास्त्यन्या तृष्णया तुल्या कापि स्त्री सुभगा क्वचित् ॥
या प्राणानपि मुञ्चन्ती भवत्येवाधिका प्रिया ॥ ४ ॥
च्युता दन्ताः सिताः केशा दृङ्निरोधः पदे पदे ॥
पातसज्जमिमं देहं तृष्णे देवि न मुञ्चसि ॥ ५ ॥
तृष्णे त्वमपि तृष्णान्धा त्रिषु स्थानेषु वर्तसे ॥
व्याधितेष्वनपत्येषु जरापरिणतेषु च ॥ ६ ॥
धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु ॥
अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च ॥ ७ ॥

तृष्णे देवि नमस्तुभ्यं या त्वां सर्वस्य सर्वदा ॥
उत्पादयस्ययत्नेन गोष्पदे सागरभ्रमम् ॥ ८ ॥
अपि मेरूपमं प्राज्ञमपि शूरमपि स्थिरम् ॥
तृणीकरोति तृष्णैषा निमेषेण नरोत्तमम् ॥ ९ ॥

नानाकवीनाम्.

( ४१ )

## स्यमन्तकोपाख्यानम्.

( तृतीयोंऽशः )

वर्षत्रयान्ते च बभ्रूग्रसेनप्रभृतिभिर्यादवैर्न तद्रत्नं कृष्णेनापहृतमिति कृतागतिभिर्विदेहपुरीं गत्वा बलदेवं संप्रत्याय्य द्वारकामानीतः। अक्रूरोऽप्युत्तममणिसमुद्भूतसुवर्णध्यानपरः सततं यज्ञानीजे। स दीक्षाकवचं प्रविष्टौ क्षत्रियवैश्यौ निघ्नन्ब्रह्महा भवतीत्यतो दीक्षाकवचं प्रविष्ट एव तस्थौ द्विषष्टिवर्षाणि। एवं तन्मणिप्रभावात्तत्रोपसर्गदुर्भिक्षमरकादिकं नाभूत्। अथाक्रूरपक्षीयैर्भोजैः शत्रुघ्ने सात्वतस्य प्रपौत्रे व्यापादिते भोजैः सहाक्रूरो द्वारकामपहायापक्रान्तः। तदपक्रान्तिदिनादारभ्य तत्रोपसर्गव्यालानावृष्टिमरकाद्यपद्रवा बभूवुः। अथ यादवबलभद्रोग्रसेनसमवेतोऽमन्त्रयद्भगवानुरगारिकेतनः किं यदिदमेकदैव प्रचुरोपद्रवागमनमेतदालोच्यताम्। इत्युक्तेऽन्धकनामा यदुवृद्धः प्राह, अस्याक्रूरस्य पिता श्वफल्को यत्र यत्राभूत्तत्र तत्र दुर्भिक्षमरकानावृष्ट्यादिकं नाभूत्। काशीराजस्य विषयेऽत्यन्तानावृष्ट्यां श्वफल्कोऽनीयत। ततस्तत्क्षणादेव देवो ववर्ष। काशिराजपत्न्याश्च गर्भे कन्या पूर्वमासीत्। सापि पूर्णेऽपि प्रसूतिकाले नैव निश्चक्राम। एवं च तस्य गर्भस्य द्वादशवर्षाण्यनिष्क्रामतो ययुः। काशीराजश्च गर्भस्थां तामात्मजा-

माह। पुत्रि कस्मान्न जायसे। निष्क्रम्यताम्। आस्यं ते द्रष्टुमिच्छाम्यहम्। स्वकां च मातरं किमत्र चिरं क्लेशयसि। इत्युक्ते गर्भस्थैव व्याजहार। तात, यद्येकैकां गां दिने दिने ब्राह्मणेभ्यो ददासि तदाहमन्यैस्त्रिभिर्वर्षैरस्माद्गर्भान्निष्क्रमिष्यामीति। एतच्च तद्वचनमाकर्ण्य राजा ब्राह्मणाय दिने दिने गां प्रादात्। सापि तावता कालेन जाता। ततस्तस्याः पिता गान्दिनीति नाम चकार। तां च गान्दिनीं कन्यां श्वफल्कायोपकारिणे गृहागतायार्घभूतां प्रादात्। सा च गान्दिनी प्रतिदिनं यावज्जीवं ब्राह्मणाय गां दत्तवती। तस्यामयमक्रूरः श्वफल्काज्जज्ञे तस्यैवंगुणमिथुनादुत्पत्तिः। तत्कथमस्मिन्नपक्रान्तेऽत्र मरकदुर्भिक्षाद्युपद्रवा न भविष्यन्ति। तदयमानीयतामित्यलमतिगुणवत्यपराध्वेषणेनेति। यदुवृद्धान्धकस्य तद्वचनमाकर्ण्य केशवोग्रसेनबलभद्रपुरोगमैर्यदुभिः कृतापराधतितिक्षाभयमभयं दत्त्वा श्वाफल्किः स्वपुरमानीतः। तत्र च आगत एव तत्स्थस्यं मणेरनुभावादनावृष्टिमरकदुर्भिक्षव्यालाद्युपद्रवः शशाम। कृष्णश्च चिन्तयामास। स्वल्पमेतत्कारणं यदयं गान्दिन्यां श्वफल्केनाक्रूरो जातः सुमहांश्चायमनावृष्टिदुर्भिक्षमरकाद्युपद्रवशमनकारी प्रभावः। तन्नूनमस्य सकाशे स महामणिः स्यमन्तकाख्यस्तिष्ठति। तस्य ह्येवंविधाः प्रभावाः श्रूयन्ते। अयमपि यज्ञादनन्तरमन्यत्क्रत्वन्तरं तस्माद्यज्ञान्तरं यजतीति। स्वल्पोपादानं चास्यासंशयमत्रासौ वरमणिस्तिष्ठतीति कृताध्यवसायोऽन्यत्प्रयोजनमुद्दिश्य सकलयादवसमाजमात्मगेह एवाचीकरत्। अत्र चोपविष्टेष्वखिलेषु यादवेषु पूर्वप्रयोजनमुपन्यस्य पर्यवसिते च तस्मिन्प्रसङ्गागतपरिहासकथामक्रूरेण सह कृत्वा जनार्दनस्तमक्रूरमाह। दानपते जानीम एव वयं यथा शतधन्वना तदिदमखिलजगत्सारभूतं स्यमन्तकरत्नं समर्पितं तदेतद्राष्ट्रोपकारकं भवतः सकाशे तिष्ठतीति। तिष्ठतु। सर्व एव वयं तत्प्रभावफलभुजः। किन्त्वेष बलभद्रोऽस्मानाश-

ङ्कितवांस्तदस्मत्प्रीतये दर्शयेत्यभिहितः सरत्नः सोऽचिन्तयत् किमत्रानुष्ठेयमन्यथा चेद्ब्रवीम्यहं केवलाम्बरतिरोधानमन्विष्यन्तो रत्नमेतद्द्रक्ष्यन्तीत्यन्वेषणं न क्षेममिति सञ्चिन्त्य तमखिलजगत्कारणभूतं नारायणमाहाक्रूरो भगवन्ममैतत्स्यमन्तकरत्नं शतधनुषा समर्पितम्। अपयाते च तस्मिन्नद्य श्वः परश्वो वा भगवान्मां याचिष्यतीति कृतमतिरतिकृच्छ्रेणैतावत्कालमधारयम्। अस्य च धारणक्लेशेनाहमशेषोपभोगेष्वसङ्गिमानसो न वेद्मि स्वसुखकलामपि। एतावन्मात्रमप्यशेषराष्ट्रोपकारि धारयितुं न शक्नोतीति भगवान्मां मंस्यत इत्यात्मना न चोदितम्। तदिदं स्यमन्तकरत्नं गृह्यतामिच्छया यस्याभिमतं तस्य समर्प्यताम्। ततः सोऽधोवस्त्रनिगोपितातिलघुकनकसमुद्गकं प्रकटीकृतवान्। ततश्च निष्क्राम्य स्यमन्तमणिं तत्र यदुसमाजे मुमोच। मुक्तमात्रे च तेनातिकान्त्या तदखिलमास्थानमुद्योतितम्। आहाक्रूरः स एष मणिर्यः शतधन्वनास्माकं समर्पितो यस्यायं स एव गृह्णात्विति। तमालोक्य सर्वयादवानां साधु साध्विति विस्मितवचसां वाचोऽश्रूयन्त। तमालोक्य ममायमच्युतेनैव सामान्यः समन्विच्छित इति बलभद्रः सस्पृहोऽभवत्। ममेदं पितृधनमित्यतीव च सत्यभामा स्पृहयाञ्चकार। बलसत्याननावलोकनात्कृष्णोऽप्यात्मानं चक्रान्तरावस्थितमिव मेने। सकलयादवसमक्षं चाक्रूरः प्राह। एतद्धि मणिरत्नमात्मसंशोधनायैषां यदूनां दर्शितम्। एतच्च मम बलभद्रस्य सामान्यं पितृधनं चैतत्सत्यभामाया नान्यस्य। एतत्सर्वकालं शुचिना ब्रह्मचर्येण च ध्रियमाणमशेषराष्ट्रस्योपकारकम्। अशुचिना ध्रियमाणमाधारमेव हन्ति। अतोऽहमस्य षोडशस्त्रीसहस्रपरिग्रहादसमर्थो धारणे। कथं चैतत्सत्यभामा स्वीकरोतु। आर्यबलभद्रेणापि मदिरापानाद्यशेषभोगपरित्यागः कथं कार्यः। तदलं यदुलोकोऽयं बलभद्रोऽहं सत्या च त्वां दानपते प्रार्थयामः। एतद्भवानेव धारयितुं समर्थः। त्वत्स्थं चास्य राष्ट्रस्योपकारकं

तद्भवानशेषराष्ट्रस्योपकारनिमित्तमेतत्पूर्ववद्धारयतु । त्वयान्यथा न वक्तव्यम्। इत्युक्तो दानपतिस्तथेत्युक्त्वा जग्राह तन्महारत्नं ततः प्रभृति चाक्रूरः प्रकटेनेवातितेजसा जाज्वल्यमानेनात्मकण्ठासक्तेनादित्य इवांशुमाली चचार । इत्येतां भगवतो मिथ्याभिशस्तिक्षालनां यः स्मरति न तस्य कदाचिदल्पापि मिथ्याभिशस्तिर्भवति । अव्याहतेन्द्रियश्चाखिलपापमोक्षमवाप्नोति ।

**श्रीविष्णुपुराणम्**

( ४२ )

## अलसकथा.

उद्योगहेतुरुत्साहः प्राणिधर्मो निगद्यते ॥
क्रियासु सर्वरूपासु विना तेनालसो भवेत् ॥ १॥

आसीन्मिथिलायां वीरेश्वरो नाम मन्त्री ॥ स च स्वभावाद्दानशीलः कारुणिकश्च सर्वेभ्यो दुर्गतेभ्यः प्रत्यहमिच्छाभोजनं ददाति तन्मध्येऽप्यलसेषु वस्त्राद्यपि दापयति । यतः—

निर्गतीनां च सर्वेषामलसः प्रथमो मतः ॥
किञ्चिन्न क्रमते कर्तुं जाठरेणापि वह्निना ॥ २ ॥

अथवा परमसुखस्थानमालस्यं यतः—

कुत्रापि तिष्ठति मनः क्वचिदङ्गकानि
नात्मा चिकीर्षति गिरा श्रममभ्युपैति ॥
आलस्यमात्रवशगस्य नरस्य मन्ये
निद्रासुखं हरति जाठर एव वह्निः ॥ ३ ॥

ततोऽलसपुरुषाणां तत्राश्रमेणेष्टलाभाद्बहवस्तुन्दपरिमृजास्तत्र वर्तुली बभूवुः । यतः—

स्थितिः सौकर्यमूला हि सर्वेषामपि जायते ॥
सजातीनां सुखं दृष्ट्वा के न धावन्ति जन्तवः ॥ ४ ॥

पश्चादलसानां सुखं दृष्ट्वा धूर्ता अपि कृत्रिममालस्यं दर्शयित्वा भोज्यं गृह्णन्ति । तदनन्तरमलसशालायां बहुद्रव्यव्ययं दृष्ट्वा तन्नियोगिपुरुषैः परामृष्टं यदाक्षमबुद्ध्या करुणया केवलमलसेभ्याः स्वामी वस्तूनि दापयति कपटेनानलसा अपि गृह्णन्तीत्यस्माकं प्रमादः । तदस्मद्दोषेण स्वामिधनं वृथा विनष्टं भवती-त्यतो यथार्थालसान्परीक्षेमहीत्यामृश्य प्रच्छन्नमलसशालायां ते नियोगिपुरुषा अग्निं दापयित्वा निरूपयामासुः । ततो गृहलग्नं प्रवृद्धमग्निं दृष्ट्वा धूर्ताः सर्वे पलायिताः पश्चादीपदलसा अपि पलायिताः । चत्वारः पुरुषास्तत्रैव सुप्ताः परस्परमालपन्ति । एकेन वस्त्रावृतमुखेनोक्तमहो कथमयं कोलाहलः । द्विती-येनोक्तं तर्क्यते यदस्मिन्गृहेऽग्निर्लग्नोऽस्ति । तृतीयेनोक्तं कोऽपि तथा धार्मिको नास्ति य इदानीं जलार्द्रैर्वासोभिः कटैर्वा प्रावृणोति । चतुर्थेनोक्तम् । अये वाचालाः कति वचनानि वक्तुं शक्नुथ । तूष्णीं तिष्ठत । ततश्चतुर्णामेव तेषां परस्परालापं श्रुत्वा वह्निं च तेषामुपरि तिष्ठन्तं दृष्ट्वा नियोगिपुरुषैः केशेष्वा-कृष्य गृहीत्वा ते बहिष्कृताः । पश्चात्तानवलोक्य पठितम्—

पतिरेव गतिः स्त्रीणां बालानां जननी गतिः ॥
नालसानां गति काचिल्लोके कारुणिकं विना ॥ ५ ॥

पश्चात्तेषु चतुर्ष्वलसेषु पूर्वतोऽप्यधिकतरं वस्तु मन्त्री दापयामास ।

## ( ४३ )

## विशाखकिंवदन्ती

पुरा बभूव पृथुर्नाम राजा। स चैकदा सुलोचनया प्रियया सह मृगयादर्शन-कौतुकेन रथमारुह्य चतुरङ्गबलोपेतः पुरान्निश्चक्राम। ततो वनं प्राप्य मृगान्वेषणाय दिशि दिशि सर्वस्मिन्सैन्ये धावति राजा त्वेक एव सञ्चरन्नरण्यमध्ये मनुष्यबालमेकं शुभलक्षणजातं दिव्याम्बरखण्डोपरि शयितं ददर्श। दृष्ट्वा च महिषीमभाषत। प्रिये पश्याश्चर्यम्। कुतोऽस्मिन्नरण्ये सिंहव्याघ्राकुले मनुष्यबालकप्रचारः। देव्युवाच। पूर्णचन्द्रमिव दृष्टिप्रियं बालकमिमं दृष्ट्वा मम हृदयं करुणार्द्रं जायते। यदि प्रभोराज्ञा भवति तदेनं बालकं गृहीत्वा पुत्रप्रेम्णा परिपालयामि। राजा सक्रोधमाह। आः पापे कथमेनमप्रज्ञातमातापितरं चाण्डालशङ्कास्पदमकारणं क्रोडे करिष्यसि। देव्युवाच। देव पुरुषो निन्द्यो भवति। तथा च—

दशा विनिन्द्या पुरुषो न निन्द्यो
रत्नप्रसूः पुत्रगुणेन नारी॥
न ज्ञायते कस्य ललाटपट्टे
विराजते किं लिखितं विधातुः॥ १॥

न च पूजितकुलादन्यत्रजातस्य कान्तिरीदृशी संभवति। स्वभावादाज्ञाभङ्गासहा एव राजानः। महिष्यश्च सौभाग्यमदगर्विता भवन्ति ततः परस्परं कलहे सति राजा तां प्रति चुकोप। रथाच्चावतारयामास। सैन्यं चादिदेश यः कश्चिन्मन्दभाग्यां नीचानुरागिणीमेनामनुसरिष्यति यं चैपानुयास्यति तस्याहं रिपोरिव शिरश्छेदं विधास्यामि। तथा हि—

आत्मघातं गृहत्यागं धनहानिं सुहृद्वधम् ॥
ज्ञानलोपकरः पुंसां कोपः कारयते न किम् ॥ २ ॥

ततः सकलसैन्यसहिते तस्मिन्भूपाले परावृत्य पुरं गते सा राज्ञी तत्र निर्जनेऽरण्ये परमभीता चिन्तयामास । अतिनिष्ठुरपुरुषप्रेयसीनामियमेव दशापरिणातिः । अथवा अलमनया चिन्तया । यन्मया कृतं तदनुसारेण व्यवहारामीति तं बालकं शयनीयवस्त्रसमेतं क्रोडे कृत्वा दग्धारण्यभस्मना स्वकीयं वस्त्रं श्यामीकृत्य भूषणान्यङ्गादवतार्य गृहीत्वा काञ्चिद्दिशमुद्दिश्य चलितवती दैवयोगेन कियत्यपि दूरे ब्रह्मपुरमेकं प्राप्य तत्र चैकां करुणावतीं धार्मिकस्वभावां ब्राह्मणीं दृष्ट्वा प्रणम्योवाच । भगवत्यार्ये दरिद्रवधूरहं सपत्निखेदिता त्वामाश्रित्य जीवितुमिच्छामि । ब्राह्मण्युवाच । न त्वं दरिद्रवधूः किन्तु राजपत्नी । यतः—

कर्णौ त्याजितकुण्डलौ भुजलते संन्यस्तरत्नाङ्गदे
हारत्यागहृतश्रियाविव कुचौ पादौ च निर्नूपुरौ ॥
सद्यस्त्यक्तविभूषणानि रुचिराण्याभाभिराभिः क्रमा—
दंगान्येव निवेदयन्ति सुदति त्वं कापि देवाङ्गना ॥ ३ ॥

ततस्तामाश्रित्य तं बालकं पुपोष । यथाविधि विशाख इति नाम्ना तमलञ्चकार । विशाखस्तु तया पोष्यमाणः क्रमेण कौमारदशामाससाद । ततो महादेवीं पप्रच्छ । मातः किं मम पितुर्नाम ? देव्युवाच । नाहं जानामि । विशाखोऽब्रवीत् । त्वं मम माता त्वमपि मम पितुर्नाम न जानासि तदा सार्थनामैवाहं विशाखः? किं करिष्याम्यविज्ञातपितृकः किमर्थमहं जीविष्यामि यतः पुत्रे जाते पिता नन्दति । मयि जाते को नन्देत् पुत्रो जातः पितरं तर्पयति अहं जातः कं तर्पयामि ! तदफलं मम जीवितमिति विलपन्मुक्तकण्ठं रुरोद । तं रुदन्तं मनस्विनं मर्तुकामं दृष्ट्वा महिषी पूर्ववृत्तान्तं

कथयामास । देव्युवाच पुत्रायं मम वृत्तान्तः । त्वय्येव करुणापराधेन ममेदृशी दुरवस्था । विशाख उवाच । मातः कथमहमेव तव दुर्दशायाः कारणम् महती प्रत्याशा तव विद्यते मयि । तदिमांस्त्यागार्हानपि प्राणान्न परित्यक्ष्यामि । तव प्रत्याशापूरणाय जीविष्यामि । यतः—

ज्ञातव्येषु च कार्येषु देशकालानुसारतः ॥
पूर्वापरपरित्यागात्पुंसां तर्कः प्रवर्तते ॥ ४ ॥

पुरुषपरीक्षा.

( ३४ )

## विशाखकिंवदन्ती

### द्वितीयोंऽशः

निरूपयामि कुतो मम जन्म । ततस्तया देव्या नीयमानस्तत्र गत्वा तदरण्यं सकलं बभ्राम । भ्रमंश्च तत्र सरोवरोपकण्ठे सुखासीनं तपःशीलनामानमृषिं ददर्श । तमुपगम्य प्रणम्याह । भगवन्प्रसीद । ऋषिरुवाच । कस्त्वं किमर्थमत्रागतोऽसि ! विशाखस्तु तं सकलं वृत्तान्तं निवेदयामास । ऋषिरुवाच । कुमार यदि तत्समयशयनीयवस्त्रखण्डं त्वया प्राप्यते तदा तव पिता च माता च ज्ञायते । ततो देव्याः सकाशादानीय तद्वस्त्रखण्डं दर्शितवान् । मुनिरपि तदर्द्धद्वितीयखण्डं स्वकीयगृहादानीय दर्शितवान् । उभे अपि निरूप्यमाणे एकस्यैव वस्त्रस्य खण्डे निश्चित्य मुनिः सलज्जमवोचत् । शृणु कुमार वृत्तान्तम् । मया महत्तपः कर्तुं प्रारब्धं तेन तपसा शक्रः शङ्काकुलितो बभूव यदयमैन्द्रं पदं ग्रहिष्यतीति । ततो मम तपोभङ्गनिमित्तं तिलोत्तमानाम्नीं विद्याधरीं प्रस्थापयामास । तस्याः शृङ्गारचेष्टाभिः सदर्पो कन्दर्पो मम हृदयं स्ववशं चकार । तथाहि—

गणयति न सदुपदेशं कलयति न भयं नवाञ्चति व्रीडाम् ॥
कज्जलमलिनकटाक्षैः कमलदृशा कवलितं चेतः ॥ ८ ॥

तस्यां त्वं मम पुत्रोऽभवः । तिलोत्तमा च मम तपोभङ्गेन कृतार्था स्वकीय परिधानवस्त्रं द्विधा कृत्वा प्रत्यभिज्ञानार्थमर्धमिदं मह्यं दत्तवती । द्वितीयमर्धमिदं शय्यां कृत्वा त्वां शाययित्वा वस्त्रान्तरं परिधाय स्वर्गं जगाम । कुमारस्तु श्रुत्वेमं वृत्तान्तं देवकन्याया मुनेश्च पुत्रोऽहमिति परमसहर्षो बभूव।मुनिरुवाच त्वं प्रतिभया प्रगल्भो भव । यत्कथयिष्यसि तत्सर्वेऽङ्गीकरिष्यन्ति । इति वरमासाद्य तेनैव पथा सुलोचनया सह पृथोर्नगरमाजगाम । तत्र च कस्यापि गृहे सुलोचनां गुप्तामवस्थाप्य स्वयं सेवकमुद्रया राज्ञः संदर्शनं कृत्वा पृथोः सेवापरायणो बभूव । क्रमेण सप्रतिभः सर्वराजनीतिचतुरः पृथोः प्रतीहारो बभूव । प्रतीहारपदव्यां वर्तमानः प्रभावेणोपकारेण दानेन च सकलमपि राज्यसुभटचक्रं वशमानीय सुलोचनां बभाषे । मातः कथय मनोरथं किं ते करवाणि ? देव्युवाच । पुत्र यदि शक्नोषि तदा पृथुराजं शृङ्खलाभिः संयम्य मे देहि । विशाख उवाच । मम लीलासाध्यमेवेदं कर्म । ततः प्रभाते त्रिचतुरैर्निजानुरक्तैः पुरुषैः शृङ्खलाहस्तैः सह खड्गहस्तः पृथोः सभावसरे सर्वान्प्रत्याह । रे रे सभासदा वः सर्वान्विज्ञापयामि । सर्वे यूयं मया सह कृतसंधाना एव । युष्माकमेक एव पुरुषो न सहितः स चात्मानं परिचिनोत्येव । स यदि हस्तपादं चालयिष्यति तदा मयानेन खड्गेनाविलम्बितमेव हन्तव्यः । साम्प्रतमहं राजानं बध्नामि । ततः शृङ्खलाहस्तद्वारा राजानं संयम्य सिंहासनादवतारयामास । सभासदस्तु स्वस्वातिरिक्तान्परस्परं कृतसन्धानानवगत्य केऽपि शस्त्राणि न व्यापारयामासुः वस्तुतस्तु सर्वेऽकृतसन्धाना एव। विशाखो राजा बभूव। तदनन्तरं संयतं पृथुं सुलोचनायाः पुरो निनाय तं दृष्ट्वा परमहृष्टा सुलोचनोवाच । कच्चिन्मां परिचिनोति देवः ? राजोवाच परिचिनोमि त्वां निजपत्नीम्। सुलोचनोवाच । विशाखः परिचीयते देवेन। राजोवाच विशाखं न जानामि। देव्युवाच यमुद्दिश्य पठितम्—

दशा विनिन्द्या पुरुषो न निन्द्यो
रत्नप्रसूः पुत्रगुणेन नारी ॥
न ज्ञायते कस्य ललाटपट्टे
विराजते किं लिखितं विधातुः ॥ ९ ॥

स एवायं शिशुरिदानीमेतावतीं पुरुषतां प्राप्तो यदनेन देवोऽपि बद्धोऽस्ति। इत्यभिधाय स राजा तया महिष्या प्रणिपत्य तस्मिन्नेव राज्ये राजा कृतः। विशाखस्तु तस्मिन्नेव राज्ञि दर्शितभक्तिर्युवराजो बभूव। श्लोकस्तत्र—

सैन्येनापि विना धनेन च विना स्निग्धैर्विना बान्धवै—
र्बुद्ध्या केवलमेव येन नृपतेर्जित्वा गृहीतं पदम् ॥
राज्ञी पूर्णमनोरथा समभवत्पित्रोः कथा द्योतिता
स ख्यातो जगतीतले प्रतिभया मन्त्री विशाखोऽभवत् ॥ १० ॥

तस्यैव कृतिरधुनापि राजनीतिसर्वस्वं मुद्राराक्षसं नाम नाटकं प्रचरत्येव धरणीतले।

पुरुषपरीक्षा

( ४५ )

## महेच्छकथा.

न्यायेनोपार्जितं वित्तं दाने भोगे च योजयेत् ॥
यः पुण्ययशसोः पात्रं महेच्छः स प्रकीर्तितः ॥ १ ॥

बभूव पाण्डुपत्तने गौडमहीपतेर्मन्त्री महाराजदेवो नाम क्षत्रियः। स च स्वामिभक्तिपवित्रः प्रभुसन्मानपात्रं मानपत्रपरिचिते नायकरवान इति सत्यराज इति च नामनी लेभे। तथाहि—

धर्मार्थकाममोक्षाख्ये पुरुषार्थचतुष्टये ॥
तं न पश्यामि लोके यः स्वामिभक्त्या न सिद्धयति ॥ २ ॥

ततः स मन्त्री सहजधार्मिको धर्माविरुद्धैरुपायैः क्षयस्थितिवृद्धिपरामर्शसनाथैः प्रचुरं धनमर्जितवान्। सञ्चितधनश्चिन्तयामास। यद्यप्यर्थः स्वतन्त्र एव पुरुषार्थस्तेन श्रीमानहमस्मीत्यभिमानो वर्तत एव तथापि श्रीः सर्वतो मुख्यास्ति। तदधिकाधिकधनोपार्जने परीक्षितभक्तयः कार्यकुशलाः पुरुषाः प्रयुक्ता एव सन्ति। तथा हि——

नाप्ताः परिजना यस्य यश्चामीषु न विश्वसेत् ॥
कार्यभारस्य वोढासौ न कार्यफलभाजनम् ॥ ३ ॥

यः कृतार्थमिवात्मानं सञ्चितैर्मन्यते धनैः ॥
निरुद्योगतया तस्य लक्ष्मीरग्रे न वर्द्धते ॥ ४ ॥

अन्यच्च—

सहायाः कुशला यस्य बहवो वशवर्तिनः ॥
करोपान्तगता तस्य धनोपार्जनयोग्यता ॥ ५ ॥

न धनं धनमित्याहुर्धनमर्जनयोग्यता ॥
हीयते हि धनं पुंसां योग्यता तु न हीयते ॥ ७ ॥

तन्ममेदानीं सर्वमस्त्येव। धनार्थं चिन्ता कापि नास्ति। तथापि धनप्रयोजनं चिन्त्यं भवति। यतः—

प्रस्थमात्रं नृपो भुङ्क्ते प्रस्थं चैवेतरे जनाः ॥
किमस्य धनसम्पत्त्या किमेषां च धनैर्विना ॥ ८ ॥

ततो धने लब्धे धनलाभफलभाजनं भवामीति परामृश्य स्रक्चन्दनवस्त्रवनितातामूलादिभिर्धर्माविरुद्धानि कीर्तिसुखान्यनुभवन्निष्टापूर्तादिभिः स्थापयंस्तुलापुरुषादिदानैः पुण्यं सञ्चिन्वन्काञ्चनैर्गुणिनश्च पूजयन्परमवैदग्ध्येन यौवनं निनाय। यौवनान्ते च विषयविरक्तौ जातायां व्रतोपवासादिकायक्लेशसाध्यमपि पुण्यराशिं सञ्चितवान्। प्रत्यासन्ने च सर्वदर्पहरे वार्द्धके क्रमेण देहे रूपबलयोरपचयं गृहे धनानामुपचयं च दृष्ट्वा चिन्तयामास। तद्यथा—

यास्यन्त्येव धनानि मय्युपरते यास्यन्ति सर्वाः कलाः
यास्यन्ति प्रभुशक्तयः क्षयमिमा यास्यन्ति देहश्रियः॥
एवं यास्यति वैभवेऽपि सकले त्यक्त्वा चिरेणापि नस्-
तत्तृष्णाविजयोत्सवाय सकलं किं न त्यजामो वयम्॥ ९॥

मत्सकलवैभवत्यागे तृष्णात्यागः प्रकाशितो भवतीति हरिश्चन्द्रस्पर्धया गंगासरय्वोः संगमे स सत्यराजोऽनशनविधिना तनुं तत्याज। सुरलोकपूजितश्च स स्वर्गं जगाम। श्लोकस्तु—

आपरार्द्धमपि सञ्चितं धनम्
आविरक्ति मदनश्च सेवितः॥
आमनोरथमिहार्थिनोऽर्चिताः
पौरुषं च किमतः परं सताम्॥ १०॥

अपि च—

दूरादुपद्वारमुपागतेभ्यः
के याचकेभ्यो वसु नार्पयन्ति॥

दाता महेच्छो महराजदेवः
प्रास्थापयत्प्रार्थकगेहमर्थान् ॥ ११ ॥

पुरुषपरीक्षा.

( ४६ )

## मूढकथा.

लप्स्यमानधनावेशात्कृतलब्धधनव्ययः ॥
त्रिवर्गविषयाविज्ञः स मूढ इति कथ्यते ॥ १ ॥

तद्यथा । आसीदयोध्यायां पुरि भूरिवसुर्नाम वणिक् । तस्य प्रचुरवसुर्नाम पुत्रो वभूव । स च पितर्युपरते लब्धपितृविभवः पितृपरिजनवृद्धान् पृच्छति स्म । रे वृद्धाः कथयत । मम पिता केनोपायेन धनमेतावदर्जितवान् । वृद्धा ऊचुः । वणिज्यया केवलम् । तथा हि—

वृद्धोपदेशतो ज्ञानं प्रतिष्ठा राजसेवया ॥
यशः पुण्यं च दानेन द्रविणं तु वणिज्यया ॥ २ ॥

प्रचुरवसुरुवाच । कीदृशी सा वणिज्या ? वृद्धा ऊचुः । साधो पिता तव गौडे क्रीतं वस्तु गज्जने विक्रीय गज्जने क्रीतं गौडे विक्रीय यदा यत्र यत्सुलभं तदा तत्र तत्क्रीणाति । महर्घं विक्रीणीते । तथा हि—

देशाद्देशान्तरं नीतं कालात्कालान्तरं तथा ॥
वस्तु मूल्यविभेदेन वणिजो लाभमादिशेत् ॥ ३ ॥
पतिभक्ता न या नारी व्यवसायी न यः पुमान् ॥
तावुभावपि लीयेते वृष्टिपापाणखण्डवत् ॥ ४ ॥

ततो भवानपि व्यवसायं कर्तुमर्हति। पुरुषो व्यवसायं विना लक्षेश्वरोऽपि लक्ष्म्या परिहीयते। ततः स वणिक्पुत्रश्चिन्तयामास। यत्कोटिसंख्यं मम वित्तं विद्यते तन्मध्ये लक्षक्रीतं वस्तु देशाद्देशान्तरं नीतं दशगुणं भविता। भाव्यमानायां धनवृद्धौ का चिन्ता? दशभिरेव लक्षैः पुनः कोटिमुत्पादयिष्यामि। संप्रति तु दशलक्षपरिशिष्टं धनव्ययं कुर्वन्यौवनोचितं सुखमनुभवामि। यतः—

अर्था भवन्ति गच्छन्ति लभ्यन्ते च पुनः पुनः॥
पुनः कदापि नायाति गतं तु नवयौवनम्॥ ५॥

परिजनास्तं तुष्टुवुः। साधु वणिक्पुत्र साधु। पिता तव कृपण आसीत्। धनोपार्जनायासमात्रपात्रं बभूव। धनं तु त्वया भोक्तव्यम्। ततस्तेषां वचनेन जातरभसः स मूढः सर्वस्वव्ययमङ्गीचकार। यतः—

धनं यस्य व्यथा तस्य व्ययव्यसनकर्माणि॥
भोक्तॄणां पुनरन्येषां कुतः पीडा धनव्यये॥ ६॥

अपिच—

आसादयन्ति खादन्ति यावत्स्वामिधनं नराः॥
तावदेव स्तुवन्त्येनं क्षीणवित्तं त्यजन्ति च॥ ७॥

इत्युदर्कमपरामृशन्नेव स युवा स्रक्चन्दनवनिताताम्बूलादीनामुपयोगेन सर्वं धनमुत्सन्नमकरोत्। परिशिष्टे दशलक्षेऽपि पूर्वेणैव परामर्षेण लक्षमेकं धृत्वा नव लक्षाणि वियोजयामास। पश्चाद्दशममपि चखाद। तथा हि-

क्षीयते निःस्रवे कूपे जनोद्धृतजले जलम्॥
निरुपाये तथा गेहे क्षीणं भवति वैभवम्॥ ८॥

ततः क्षीणे सर्वधने वणिक्पुत्रः सर्वोपायासमर्थोऽवसादमाससाद ।

श्लोकः—

वित्तं विना बुद्धिविवेकहीनः
पूर्वानुगत्या बहुलव्ययश्च ॥
लक्षेश्वरो निर्धनतामुपेतः
कमप्युपायं क्षमते न कर्तुम् ॥ ९ ॥

पुरुषपरीक्षा

( ४७ )

## चन्द्रान्योक्तयः

आलोकवन्तः सन्त्येव भूयांसो भास्करादयः ॥
कलावानेव तु ग्रावद्रावकर्मणि कर्मठः ॥ १ ॥

दैवाद्यद्यपि तुल्योऽभूद्भूतेशस्य परिग्रहः ॥
तथापि किं कपालानि तुलां यान्ति कलानिधेः ॥ २ ॥

अहो नक्षत्रराजस्य साभिमानं विचेष्टितम् ॥
परिक्षीणस्य वक्रत्वं सम्पूर्णस्य सुवृत्तता ॥ ३ ॥

शिरसा धार्यमाणोऽपि सोमः सोमेन शम्भुना ॥
तथापि कृशतां धत्ते कष्टः खलु पराश्रयः ॥ ४ ॥

हरमुकुटे सुरतटिनीनिकटस्थितिलोभतो द्विजेन्द्रेण ॥
अपि गरलं फणिफूत्कातिरीक्षणतीक्ष्णाशुशुक्षाणिः क्षान्तः ॥ ५ ॥

निजकरनिकरसमृद्ध्या धवलय भुवनानि पार्वण शशाङ्क ॥
सुचिरं हन्त न सहते हतविधिरिह सुस्थितं कमपि ॥ ६ ॥

व्यज्यमानकलङ्कस्य वृद्धौ वृद्धौ कलानिधेः ॥
आशास्महे वयं पूर्वां सर्वश्लाघ्यां कृशां दशाम् ॥ ७ ॥

क्षीणः क्षीणः समीपत्वं पूर्णः पूर्णोऽतिदूरताम् ॥
उपैति मित्राद्यच्चन्द्रो युक्तं तन्मलिनात्मनः ॥ ८ ॥

यद्यपि शिरोऽधिरोहति रौद्रः क्रोधेन सिंहिकातनयः ॥
त्यजति न शरणं यातं सागरसूनुर्मृगं तदपि ॥ ९ ॥

यज्जातोऽसि पयोनिधौ हरजटाजूटे प्रसिद्धोऽसि य-
द्विश्वस्योदरदीपकोऽसि विधिना सृष्टोऽसि यच्चामृतैः ॥
भ्रातः शीतमयूख सर्वमधुना म्लानीकृतं तत्त्वया
राजीवं यदपास्य कैरवकुलं नीतं विकासास्पदम् ॥ १० ॥

शार्ङ्गधरपद्धतेः

## ( ४८ )

## शास्त्रविद्यकथा.

अधीत्य चार्थं विज्ञाय पारगस्त्वर्कचन्द्रयोः ॥
शास्त्रेण विद्यया ख्यातः शास्त्रविद्यः स उच्यते ॥ १ ॥

आसीदुज्जयिन्यां पुरि विक्रमादित्यो नाम राजा । तत्रैकदा कश्चिदेको ब्राह्मणः शिरोवेदनाग्रस्तस्तस्य द्वारमाजगाम । ब्राह्मण उवाच—

अत्याज्यं हि व्रतं राज्ञः प्रजानां परिपालनम् ॥
दुर्गतव्याधितार्तानां ब्राह्मणानां विशेषतः ॥ २ ॥

ततो मां दुर्गतं व्याधिपीडितं ब्राह्मणं त्रायतां देवः । राजा तं ब्राह्मणं तथाविधं दृष्ट्वा करुणार्द्रहृदयः किमत्र भविष्यतीति जिज्ञासुर्वराहनामानं ज्योतिःशास्त्रविदं प्रत्यब्रवीत् । हे वराह, कच्चिदयं ब्राह्मणो जीविष्यति ? वराह उवाच, अकृतमद्यपान एव न नीरुग्भविष्यति जीविष्यति पुरुषायुषम् । तदाकर्ण्य राजा चिन्तयामास । अहो शास्त्रदृष्टिरसौ किं ब्रूते। ब्राह्मणस्य कुतो मद्य-पानप्रसङ्गः । भवतु पश्यामि तावत् । ततो राजा हरिश्चन्द्रनामानं भिषजमाहूया-दिदेश । भोः कोऽस्य व्याधिः का वा चिकित्सा । भिषगुवाच । देव व्याधि-र्ब्रह्मकीटः प्रतिक्रियास्य काचिन्नास्त्येव । राजोवाच । व्याधेर्भेषजं न कृतं विधि-नेत्यसंभाव्यम् । भिषगुवाच । ब्रह्मकीटः शिरोगोऽस्य भवति तेनायं वेदनाविह्वलो विद्यते स ब्रह्मकीटो नाग्निना दह्यते न लोहेन भिद्यते न जलेन क्लिद्यते केवलं मद्येन म्रियते । तन्मदिरैवास्य भेषजम् । राजोवाच । शान्तं पापम् । ब्राह्मणस्य मदिरा दातव्या । भिषगुवाच । तया विना ब्राह्मणो न जीविष्यति इति निश्चयः । राजा परमधार्मिकं परदुःखं प्रतिचिकीर्षुः शबरस्वामिनमाचार्यं धर्मशास्त्र विदमाहूय पृष्टवान् । अयि किमत्र विधेयम् ? आचार्य उवाच । अन्यथाऽ-साध्ये व्याधिप्रतीकारे मद्यपानैकसाध्यायां ब्राह्मणस्य प्राणरक्षायां यदि वैद्यो निश्चितज्ञानो भवति तदास्य प्राणरक्षार्थिनो ब्राह्मणस्य मद्यपानेनापि न पापं भवति । वैद्य उवाच । यद्ययं मदिरापानेन विनोपायान्तरेण जीवति ब्राह्मण-स्तदाहं पातकी भवामि । ततो राजा तयोरुभयोरपि स्वस्वशास्त्रसिद्धान्तदार्ढ्यं श्रुत्वा ब्राह्मणाय मद्यं पातुमादिदेश । तत्रोपनीते च मद्ये तदाकाशवागभूत् । रे शबर मा साहसं कार्षीः । तदाकर्ण्य शबरस्वाम्युवाच । पिब रे ब्राह्मण मद्यं वाग्देवतेयं वर्णपदवाक्योपचयमात्रकुशला किं जानाति धर्मस्य निर्णयम् । तदनन्तरं शबरस्वामिनः शिरसि पुष्पवृष्टिर्बभूव । तया पुष्पवृष्ट्या श्रद्धालुः

सभासद्भिः सहितो राजा शबरस्वामिनो वचनमादाय ब्राह्मणाय मद्यं दापयामास। ब्राह्मणस्य त्वाजन्मनो मद्यास्वादाज्ञतया तद्गन्धपराभूत एव ब्रह्मकीटो नासारन्ध्रेण भूमौ निपपात। निपतितं कीटं राजा वैद्यवचनपरीक्षाकुतूहली वह्नौ चिक्षेप। ततो वह्निक्षिप्तमदग्धं वारिणि प्रवेशितमक्लिन्नं विदारितमनवदीर्णं मद्यविन्दुना विलीनं दृष्ट्वा सर्वे साश्चर्या बभूवुः। राजोवाच। भो वैद्य कीदृशस्ते शास्त्रनिश्चयः। यतस्त्वया मद्यपानमुपन्यस्तं व्याधिस्तु मद्यगन्धेनैव निराकृतोऽभूत्। वैद्य उवाच। देव यदि मद्यगन्ध ग्रहणमेवोपन्यस्तं स्यात्तदा मद्यपात्रं ब्राह्मणः स्वनासातो दूरत एवाधरिष्यत्। एवं च मदिरागन्धोऽपि नास्य शिरसि यथावत्प्रविशेत्ततो मया पानमुपन्यस्तम्। राजोवाच। साधु वैद्य साधु। सभासद ऊचुः। देव साधूक्तं हरिश्चन्द्रवराहाभ्याम्। तत्सर्वसभ्यसाक्षिकमेव जातं शबरस्वामिना च सुरमण्डलीविरचितपुष्पवृष्टि साक्षिकमेव साधूक्तम्। ततः स्वस्वशास्त्रसिद्धान्तविद एवामी त्रयोऽपि। तथा हि—

धन्यस्त्वं नृपतिर्धरा भगवती धन्यैव धन्या वयं
धन्या सर्वगुणान्वितैः सुकृतिभिर्जुष्टा तवेयं सभा॥
रुग्भैपज्यबुधो यथार्थवचनः सन्देहनिर्णायको
यत्रायं भिषगस्ति यत्र गणको यत्रैष मीमांसकः॥ ३॥

ततो राज्ञा जाताहंकारेण पुलकितेन परमोत्साहचेतसा त्रयोऽपि शास्त्रविदः काञ्चनैः, करिभिस्तुरङ्गैर्वासोभिश्च पूजितास्तस्य स्वायत्तसिद्धेर्नृपस्योपकरणानि बभूवुः। स च नीरुग्ब्राह्मणोऽपि सुवर्णेनादरिद्रीकृत्य गृहं प्रस्थापितः।

( ४९ )

## सात्त्विककथा.

बभूव मिथिलायां बोधिनामा कायस्थः। स तु कायस्थकुलमर्यादया राजनियोगं कुर्वाणोऽपि न कंचन प्राणिनं हिनस्ति। न परस्वमादत्ते। स्वामिदत्तेनाजीव्यधनेन केवलं जीवति। शूद्रोचितमाह्निकं स्वकीयार्जनोचितं दानं देशकालोचितं च ब्राह्मणाराधनं कुर्वाणः शिवपूजापरायणः समयं निनाय। प्रत्यासन्ने चान्तकाले तेन पद्यमिदं पौराणिकं श्रुतम्—

परहिंसापरद्रव्यपरदारपराङ्मुखः
गङ्गाप्याह कदागत्य मामयं पावयिष्यति ॥ १ ॥

श्रुत्वा च परामृष्टवान्। यदाऽऽजन्मनो मयापि परहिंसा न कृतास्ति न परद्रव्यमनीत्या गृहीतं न परदाराभिलाषः कृतः। तदहमपि तद्विशेषणत्रय-विशिष्ट एव। यतः

अकृत्यं दूरतस्त्यक्तं सुकृत्ये च मतिः कृता ॥
तत्त्वनिष्ठैकभावेन नीतं च सकलं वयः ॥ २ ॥

ततो भगवत्याः श्रीगङ्गाया वाक्यमिदं परीक्षेऽहम्। पश्चाद्भागीरथीमुद्दिश्य गत्वा कूलादर्वाक्क्रोशमात्रप्रदेशे स्थित्वा तत्पौराणिकं पद्यार्धं स्वकीयेन श्लोकार्द्धेन पूरयित्वा श्लोकं पपाठ। तद्यथा—

परहिंसापरद्रव्यपरदारपराङ्मुखः ॥
सोऽहमभ्यागतो देवि गङ्गे याहि पवित्रताम् ॥ ३ ॥

तदनन्तरं जातपरितोषया कूलंकपकल्लोलमालया सञ्चरत्कूर्ममीनमकरशिशुमारया प्रवाहपतितोभयतटविटपया मुक्ताहारधवलजलया गङ्गया प्लाविताङ्गः

स कायस्थो बभूव। आयुषि पूर्णे विधिनियोगात्परित्यक्ततनुर्मुक्तिं गतः। तथाविधं भागीरथ्याः करुणापरिणामपरीक्षितचरित्रं विरञ्चिमिवाद्यापि तं कायस्थं स्तुवन्ति साधवः। श्लोकस्तु—

वपुर्याति श्रियो यान्ति यान्ति सर्वेऽपि बान्धवाः ॥
कथासारे हि संसारे कीर्तिरेव स्थिरा भवेत् ॥ ४ ॥

पुरुषपरीक्षा

( ५० )

## नीतिः

किंशुके किं शुकः कुर्यात्फलितेऽपि बुभुक्षितः ॥
अदातरि समृद्धेऽपि किं कुर्युरुपजीविनः ॥ १ ॥
सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ॥
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ २ ॥
वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम् ॥
पुंसां विवेकमुक्तानां सेवया न धनार्जनम् ॥ ३ ॥
जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः ॥
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ ४ ॥
न कश्चिच्चण्डकोपानामात्मीयो नाम भूभृताम् ॥
होतारमपि जुह्वन्तं दहत्येव हि पावकः ॥ ५ ॥
गन्तव्यं राजकुलं द्रष्टव्या राजपूजिता लोकाः ॥
यद्यपि न भवन्त्यर्थास्तथाप्यनर्था विलीयन्ते ॥ ६ ॥
अत्यासन्ना विनाशाय दूरतश्चाफलप्रदाः
मध्यभावेन सेव्यन्ते राजवह्निर्गुरुस्त्रियः ॥ ७ ॥

सारासारपरिच्छेत्ता स्वामी भृत्यस्य दुर्लभः ॥
अनुकूलः शुचिर्दक्षः प्रभोर्भृत्योऽपि दुर्लभः ॥ ८ ॥
अतितेजस्व्यपि राजा पानासक्तो न साधयत्यर्थान् ॥
तृणमपि दग्धुं शक्तो न वाडवाग्निः पिबन्ननिशम् ॥ ९ ॥

शार्ङ्गधरपद्धतेः,

(५१)

## ब्राह्मणाश्रमवर्णनम् ।

अथ तत्रानवरताध्ययनध्वनिमुखराणि, भस्मपुण्ड्रकपाण्डुरललाटैः कपिलशिखानालजटिलैः कृशानुभिरिव ऋतुलोभागतैर्वटुभिरध्यास्यमानानि सेकसुकुमारसोमकेदारिकाहरितायमानप्रघनानि, कृष्णाजिनविकीर्णशुष्यत्पुरोडाशीयश्यामाकतण्डुलानि, बालिकाविकीर्यमाणनीवारबलीनि शुचिशिष्यशतानीयमानहरितकुशपूलीपलाशसमिन्धि, इन्धनगोमयपिण्डकूटसङ्कटानि, आमिक्षीयक्षीरक्षारिणीनामग्निहोत्रधेनूनां खुरवलयैर्विलिखिताजिरवितर्दिकानि कामण्डलव्यमृत्पिण्डमर्दनव्यग्रयतिजनानि, वैतानवेदीशङ्कव्यानामौदुम्बरीणां शाखानां राशिभिः पवित्रितपर्यन्तानि, वैश्वदेवपिण्डपङ्क्तिपाण्डुरितप्रदेशानि, हविर्धूमधूसरिताङ्गनविटपिकिसलयानि, वत्सीयबालकलालितललत्तरलतर्णकानि, क्रीडत्कृष्णसारच्छागशावकप्रकटितपशुबन्धप्रबन्धानि, शुकशारिकारब्धाध्ययनदीयमानोपाध्यायविश्रान्तिसुखानि साक्षात्त्रयीतपोवनानीव चिरदृष्टानां बान्धवानां प्रीयमाणो भ्रमन्भवनानि सुखमतिष्ठत् ।

हर्षचरितम् ।

( ५२ )

## ऋष्याश्रमवर्णनम् ।

अनतिदूरमिव गत्वा दिशि सदासन्निहितकुसुमफलैस्तालतिलकतमाल

हिन्तालबकुलबहुलैरेलालताकुलितनारिकेलीकलापैर्लोललोध्रलवलीलवङ्गपल्लवै-रुल्लसितचूतरेणुपटलैरलिकुलझङ्कारमुखरसहकारैरुन्मदकोकिलकुलकलापको-लाहलिभिरुत्फुल्लकेतकीरजःपुञ्जपिञ्जरैः पूगीलतादोलाधिरूढवनदेवतैस्तारका-वर्षमिवाधर्मविनाशपिशुनं कुसुमविकरमनिलचलितमनवरतमतिधवलमुत्सृ-जद्भिः संसक्तपादपैः काननैरुपगूढम्, अचकितप्रचलितकृष्णसारशतशबला-भिरुत्फुल्लकमलिनीलोहिनीभिर्मारीचमायामृगावलूनरूढवीरुद्दलाभिर्दाशरथिचाप-कोटिक्षतकन्दगर्तविषमिततलाभिः दण्डकारण्यस्थलीभिरुपशोभितप्रान्तम्, आगृहीतसमित्कुशकुसुममृद्भिरध्ययनमुखरशिष्यानुगतैः सर्वतः प्रविशद्भिर्मुनि-भिरशून्योपकण्ठम्, उत्कण्ठिशिखण्डिमण्डलश्रूयमाणजलकलशपूरणध्वानम्, अनवरताज्याहुतिप्रीतैश्चित्रभानुभिः सशरीरमेव मुनिजनममरलोकं निनीषु-भिरुद्धूयमानधूमलेखाछलनाबद्ध्यमानस्वर्गमार्गगमनसोपानसेतुभिरिवोपलक्ष्यमा-णम्, आसन्नवर्तिनीभिस्तपोधनसम्पर्कादिवापगतकालुष्याभिः, तरङ्गपरम्परा-सङ्क्रान्तरविबिम्बपङ्क्तिभिः, तापसदर्शनागतसप्तर्षिमालाविगाह्यमानाभिरिव, विकचकुमुदवनमृषिजनमुपासितुमवतीर्णं ग्रहगणमिव निशासूदन्तीभिर्दीर्घि-काभिः परिवृतम्, अनिलावनमितशिखाभिः प्रणम्यमानमिववनलताभिः, अनवरतमुक्तकुसुमैरभ्यर्च्यमानमिव पादपैः आबद्धपल्लवाञ्जलिभिरुपास्यमान-मिव विटपैः, उटजाजिरप्रकीर्णशुष्यच्छामाकम्, उपसंगृहीतामलकलवली-कर्कन्धूकदलीलकुचचूतपनसतालीफलम्, अध्ययनमुखरवटुजनम्, अनवर-तश्रवणगृहीतवषट्कारवाचालशुककुलम्, अनेकसारिकोद्घुष्यमाणसुब्रह्म-ण्यम्, अरण्यकुक्कुटोपभुज्यमानवैश्वदेवबलिपिण्डम्, आसन्नवापीकलहंसपो-तभुज्यमाननीवारबलिम्, एणीजिह्वापल्लवोपालिह्यमानमुनिबालकम्, अग्निका-र्योद्दिदग्धसिमसिमायमानसमित्कुशकुसुमम्, उपलभग्ननालिकेररसस्निग्धशिला-

तलम्, अचिरक्षुण्णवल्कलरसपाटलभूतलम्, रक्तचन्दनोपलिप्तादित्यमण्डलक-निहितकरवीरकुसुमम्, इतस्ततो विक्षिप्तभस्मरेखाकृतमुनिजनभोजनभूमिपरि-हारम्, परिचितशाखमृगकराकृष्टनिष्कास्यमानप्रवेश्यमानजरदन्धतापसम्, इभकलभार्द्धोपभुक्तपतितैः सरस्वतीभुजलताविगलितैः शङ्खवलयैरिव मृणाल शकलैः कल्माषितम्, ऋषिजनार्थमेणकैर्विषाणशिखरोत्खन्यमानविविधकन्द-मूलम्, अम्बूपूर्णपुष्करपुटैर्वनकरिभिरापूर्यमाणविटपालवालकम्, ऋषिकुमार-काकृष्यमाणवनवराहदंष्ट्रान्तराललग्नशालूकम्, उपजातपरिचयैः कलापिभिः पक्षपुटवनसन्धुक्ष्यमाणमुनिहोमहुताशनम्, आरब्धामृतचरुचारुगन्धम्, अर्ध-पक्वपुरोडाशपरिमलामोदितम्, अविच्छिन्नाज्यधाराहुतहुतभुग्झङ्कारमुखरि-तम्, उपचर्यमाणातिथिवर्गम्, पूज्यमानपितृदैवतम्, अर्च्यमानहरिहर-पितामहम्, उद्दिश्यमानश्राद्धकल्पम्, व्याख्यायमानयज्ञविद्यम्, आलोच्य-मानधर्मशास्त्रम्, वाच्यमानविविधपुस्तकम्, विचार्यमाणसकलशास्त्रार्थम्, आरभ्यमाणपर्णशालम्, उपलिप्यमानाजिरम्, उपमृज्यमानोटजाभ्यन्तरम्, आवध्यमानध्यानम्, साध्यमानमन्त्रम्, अभ्यस्यमानयोगम्, उपदूयमानवन-देवताबलिम्, निर्वर्त्यमानमौञ्जमेखलम्, क्षाल्यमानवल्कलम्, उपसंगृह्यमाण-समिधम्, उपसंस्क्रियमाणकृष्णाजिनम्, गृह्यमाणगवेधुकम्, शोष्यमाण-पुष्करबीजम्, ग्रथ्यमानाक्षमालम्, न्यस्यमानवेत्रदण्डम्, सत्क्रियमाणप-रिव्राजकम्, आपूर्यमाणकमण्डलुम्, अदृष्टपूर्वं कलिकालस्य, अपरिचि तमनृतस्य, अश्रुतपूर्वमनङ्गस्य, अब्जयोनिमिव त्रिभुवनवन्दितम्, असुरारिमिव प्रकटितनरहरिवराहरूपम्, सांख्यमिव कपिलाधिष्ठितम्, मथुरोपवनमिव बलावलीढदर्पितधेनुकम्, उदयनमिवानन्दितवत्सकुलम्, किंपुरुषाधिराज्य-मिव मुनिजनगृहीतकलशाभिषिच्यमानद्रुमम्, निदाघसमयावसानमिव प्रत्या-

सन्नजलप्रपातम्, जलधरसमयमिव वनगहनमध्यसुप्तहरिम्, हनूमन्तमिव शिलाशकलप्रहारसञ्चूर्णिताक्षास्थिसञ्चयम्, खाण्डवविनाशोद्यतार्जुनमिव प्रारब्धाग्निकार्यम्, सुराभिविलेपनधरमपि सततविर्भूतहव्यधूमगन्धम्, मातङ्गकुलाध्यासितमपि पवित्रम्, उल्लसितधूमकेतुशतमपि प्रशान्तोपद्रवम् परिपूर्णद्विजपतिमण्डलसनाथमपि सदासन्निहित तरुगहनान्धकारम्, अतिरमणीयमपरामिव ब्रह्मलोकपश्यम्।

कादम्बरी.

(५६)

## हिमवद्वर्णनम्

अथ जयाय नु मेरुमहीभृतो रभसयानुदिगन्तदिदृक्षया ॥
अभिययौ स हिमाचलमुच्छ्रितं समुदितं नु विलङ्घयितुं नभः॥१॥
तपनमण्डलदीपितमेकतः सततनैशतमोवृतमन्यतः ॥
हसितभिन्नतमिस्रचयं पुरः शिवमिवानुगतं गजचर्मणा ॥ २ ॥
क्षितिनभःसुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परैः ॥
प्रथयितुं विभुतामतिनिभृतं प्रतिनिधिं जगतामिव शम्भुना ॥ ३ ॥
भुजगराजसितेन नभःश्रिता कनकराजिविराजित सानुना ॥
समुदितं निचयेन तडिद्वतीं लवयता शरदम्बुदसंहतिम् ॥ ४ ॥
मणिमयूखचयांशुकभासुराः सुरवधूपरिभुक्तलतागृहाः ॥
दधतमुच्चशिलान्तरगोपुराः पुर इवोदित पुष्पवना भुवः ॥५॥
अविरतोज्झितवारिविपाण्डुभिर्विरहितैरचिरद्युतितेजसा ॥
उदितपक्षमिवारतनिःस्वनैः पृथुनितम्बविलम्बिभिरम्बुदैः ॥ ६ ॥

दधतमाकरिभिः करिभिः क्षतैः समवतारसमैरसमैस्तटैः ॥
विविधकामहिता महिताम्भसः स्फुटसरोजवना जवना नदीः ॥ ७ ॥
नवविनिद्रजपाकुसुमत्विषां द्युतिमतां निकरेण महाश्मनाम् ॥
विविधसांध्यमयूखमिव क्वचिन्निचितकाञ्चनभित्तिषु सानुषु ॥ ८ ॥
पृथुकदम्बकदम्बकराजितं ग्रथितमालतमालवनाकुलम् ॥
लघुतुषारतुषारजलच्युतं धृतसदानसदाननदान्तिनम् ॥ ९ ॥
रहितरत्नचयान्नशिलोच्चयानपलताभवना न दरीभुवः ॥
विपुलिनाम्बुरुहा न सरिद्वधूरकुसुमान्दधतं न महीरुहः ॥ १० ॥
व्यथितसिन्धुमनीरशनैः शनैरमरलोकवधूजघनैर्घनैः ॥
फणिभृतामभितो विततं ततं दयितरम्यलताबकुलैः कुलैः ॥ ११ ॥
ससुरचापमनेकमणिप्रभैरपपयोविशदं हिमपाण्डुभिः ॥
अविचलं शिखरैरुपबिभ्रतं ध्वनितसूचितमम्बुचयांचयम् ॥ १२ ॥
विकचवारिरुहं दधतं सरः सकलहंसगणं शुचि मानसम् ॥
शिवमगात्मजया च कृतेर्ष्यया सकलहं सगणं शुचिमानसम् ॥ १३ ॥
ग्रहविमानगणानभितो दिवं ज्वलयतौपधिजेन कृशानुना ॥
मुहुरनुस्मरयन्तमनुक्षपं त्रिपुरदाहमुमापतिसेविनः ॥ १४ ॥
विततशीकरराशिभिरुच्छ्रितैरुपररोधविलम्बिभिरम्बुभिः ॥
दधतमुन्नतसानुसमुद्धतां धृतसितव्यजनामिव जाह्नवीम् ॥ १५ ॥
अनुचरेण धनाधिपतेरथो नगविलोकनविस्मितमानसः ॥
स जगदे वचनं प्रियमादरान्मुखरतावसरे हि विराजते ॥ १६ ॥

किरातार्जुनीयम्.

( ५४ )

## चाणक्यकथा.

लोककर्माणि यो दक्षो विद्ययापि विना भवेत् ॥
फले सादृश्यवांल्लोके लोकविद्यः स उच्यते ॥ १ ॥

आसीत्कुसुमपुरे नन्दो नाम राजा । तस्य कायस्थः शकटारो नाम मन्त्री बभूव । स च केनाप्यपराधेन सर्वस्वं गृहीत्वा सपुत्रकलत्रो राज्ञा कारागृहे निक्षिप्तः । तत्रापि तस्मै सपरिवाराय शरावपरिमिता एव सक्तवः प्रतिदिनं भक्ष्यत्वेन दीयन्ते । तद्दृष्ट्वा तेन शकटारेण परिवारेष्वभिहितम् । यदयं राजा करालहृदयो विनापराधेनास्मान्दुःखं दत्वा पातयति । शरावमात्रैः सक्तुभिः सर्वेषामस्माकमाहारसिद्धिर्न संभवत्येव ततः स खादतु सक्तुशरावं योऽस्य प्रत्युद्धारे समर्थो भवति । परिवारैरुक्तम् ' आर्य ' यदि भवाञ्जीवति तदा परमेतस्य वैरस्य परिवारसंहारसंभवस्य प्रत्युद्धारः संभवति । ततः सकलपरिवाराणां परामर्शेन शकटार एव तदन्नं खादित्वा स्वकीयजीवं रक्षितवान् । परिवारस्तस्य मृत एव । एकदा स राजा नन्दः प्रस्तावगृहान्मन्दस्मितं कुर्वन्बहिर्बभूव । तं हसन्तं दृष्ट्वा पानीयपरिचारिका तदानीं तत्रावस्थिता विचक्षणानाम चेटी जहास । तां हसन्तीं दृष्ट्वा राजोवाच । रे विचक्षणे कुतो हससि । विचक्षणोवाच यतो देवो हसति । राजोवाच, मया कुतो हस्यते । विचक्षणोवाच तदहं न जानामि । राजोवाच । आः पापे कपटिनि त्वयैवोक्तं यतो राजा हसति ततोऽहमपि हसामि । पुनरिदानीं त्वमेवाभिदधासि यदहं देवस्य हास्यकारणं न जानामि । किमेते परस्परविरोधिनी वचसे कथयसि । यदि स्वहितमिच्छसि तदा कथय मे सत्वरं हासबीजम् । नो चेत्तदा तव शास्तिं करिष्यामि । ततो लब्धावधिः सा दासी चिन्तयामास

यत्सुबुद्धिपरामर्शपरिच्छेद्यमेतत् । ततः सुबुद्धिं कमपि पृच्छामि सुबुद्धिषु प्रथमं गणनीयः शकटारः । स चेदानीं विधिनिदेशतः कारागारे तिष्ठति । ततस्तमेव गत्वा पृच्छामीति परामृश्य तत्र गतवती । तत्र च कारागृहदुःखनिर्बलं शकटारं मिष्टान्नपानैः परितोष्य राजप्रश्नोत्तरमपृच्छत् । शकटार उवाच । विचक्षणे विना देशकालानुसारिणा प्रकरणज्ञानेन परिच्छेत्तुं न शक्यते राज्ञः स्मितकारणम् । तदवसरं कथय । विचक्षणा चावसरं कथितवती । शकटार उवाच त्वं कथयसि यन्मूत्रप्रवाहं दृष्ट्वा पश्चादश्वत्थवृक्षं पश्यन्राजा जहास । तर्हि पूर्वदृष्टस्य कस्यापि वस्तुनो न हासनिमित्तत्वम् । हासस्य वस्तुविकृतिजन्यत्वदर्शनात् । तद्विकृतं दृष्टं राज्ञा । आ ज्ञातं मूत्रप्रवाहे वहदश्वत्थबीजं क्षुद्रतरं दृष्ट्वा तदुद्भूतं महापरिमाणं वृक्षं पश्यन्परामृष्टवान्राजा यदहो वैकृत्यं विधातुः प्रपञ्चस्य । केदं बीजं क तरुस्तत्सम्भव एवेति हसितं भूपालेन । पुनः पुनः परामृश्य शकटारस्तदेव निर्धारितवान् । अब्रवीच्च । विचक्षणया तदेव वचनं गत्वा राज्ञः पुरस्तादुक्तम् ।

(५५)

## चाणक्यकथा.

### द्वितीयोऽशः

राजोवाच । विचक्षणे सत्यं कथय । शकटारो जीवन्वर्तते, विचक्षणोवाच । अथ किम् । राजोवाच कोऽन्यः शकटारादिदं निर्द्धारयितुमलंभवति । अहो तर्कः शकटारस्य । ततस्तर्कपरितुष्टेन राज्ञा शकटारः पुनरानीय सम्मानपात्रं कृत्वा राजचर्यायां मन्त्रिराक्षसमुपमन्त्रिणं कृत्वा मुख्यमन्त्री कृतः । शकटारस्तु तां पदवीमासाद्य चिन्तयामास । अहो दुर्नीतिरस्य राज्ञः सकलपरिवारं मम हत्वा मामेव मन्त्रिपदव्यां स्थापयति । मूलमुच्छिद्य दले जलं ददाति । तथा हि—

य: पूर्वं वैरमुत्पाद्य पुन: सौहृदमिच्छति ॥
यमपत्तनयात्राया: स पन्थानमपेक्षते ॥ २ ॥

कथं वा ममापि मन: प्रत्येति दुष्टाशयेऽस्मिन् । यत:—

दृष्टा वैरक्रिया यस्य परा पर्यन्तघातिनी ॥
तस्मिन्विश्वासमायान्तं मृत्युर्जिघ्रति मस्तके ॥ ३ ॥

तदिदानीं किमुचितम् । पुरातनमस्य वैरमिदानींतनं च सौहृदं चिन्तयन्सन्दिग्धचित्तोऽस्मि । अथवा वैरोद्धारार्थमेव मया जीवनं स्वीकृतं यदनेन दुरात्मना कुस्वामिना पश्यतो मम पुत्रादयो हता: । तद्यथा—

सर्वस्वं गतमेव गच्छतु ततो म्लानिर्न वै मादृशां
लक्ष्मीचञ्चलताभृतैव सुधिय: शोचन्ति तां के गताम् ॥
ते पुत्रा: सदसि प्रगल्भवचसस्ता: सानुरागा: स्त्रियो
नष्टार: किल ते च ते च शिशवश्चेतो न मुञ्चन्ति मे ॥ ४ ॥

तद्वैरमुद्धरणीयम् । तथाप्ययशो वार्यते वैरमप्युद्ध्रियते तदत्युचितं भवति तेनाधमपुरुषपदवी न प्राप्यते । तथाहि—

पापान्त्रस्यति य: स एव पुरुष: स्यादुत्तमो भूतले
पापात्मा च बिभेति योऽपयशस: स ज्ञायते मध्यम: ॥
त्रासस्तस्य न पातकादपि न वा लज्जापवादादपि
प्रज्ञावद्भिरुदाहृतोऽयमधम: सर्वत्र निन्दास्पदम् ॥ ५ ॥

इति चिन्तयन्नेव स मन्त्री कदाचिदारामदर्शनकौतुकेन तुरङ्गमारूढो भ्रमन्पुराद्बहि: कियत्यपि दूरे कुशानुपाट्य कुशमूले तक्रं ददानं ब्राह्मणं ददर्श । तं दृष्ट्वा शकटार उवाच । वटो कस्त्वं किमत्रकुरुषे ? ब्राह्मण उवाच चाणक्य-

शर्मा ब्राह्मणोऽहम् । साङ्गं वेदमधीत्यानेन पथा विवाहार्थितया गच्छतो मम कुशांकुरेण पादे क्षतं कृतम् । तेन क्षतेन विवाहभङ्गामर्षितः प्रतिज्ञातवानस्मि । यदस्याः स्थल्याः कुशं निर्मूलं करिष्ये । ततो वृक्षायुर्वेदाधिगमादुपायः सुकरो निर्द्धारितः । यत्तक्रेण कुशा विनश्यन्तीति । तथा समाचरन्पूर्णप्रतिज्ञो भविष्यामि । शकटार उवाच । दिष्ट्या भवता वृक्षायुर्वेदाधिगमः कृतो नोचेत्प्रतिज्ञापूरणं कथं स्यात्? चाणक्य उवाच । यद्ययमुपायो न स्यात्तदाभिचारिककर्मणि प्रवीणोऽस्मि । कुशविनाशकामनया होममेवाकरिष्यम् । तदाकर्ण्य शकटारश्चिन्तयामास । अहो, अस्य ब्राह्मणस्यामर्शातिशयः । अहो उपायप्रवीणता । यद्ययं मम वैरिणो वैरी भवति तदाहं वैरोद्धारं करवाणि । विनायासेनैव कृतार्थो भवामि । ततः शकटारः स्वकीयसाहाय्येन कुशोन्मूलनं कारयित्वा तं ब्राह्मणं स्वकीयमगारमानीतवान् पश्चात्पुरोधसा संप्रधार्य राज्ञः पितृक्षयाहश्राद्धे तं पात्रत्वेनोपनीतवान् । परामृष्टवांश्च यदयं ब्राह्मणोऽकृतविवाहः, कपिलः, श्यावनखदन्तश्चपात्रानर्ह एव । ममाधिकारविरोधिना मन्त्रिराक्षसेन मयोपन्यस्तोऽयमिति निश्चितमपमानयितव्यः । पश्चात्तथैव नन्दराज्ञि श्राद्धं कर्तुमुद्यते चाणक्ये च पात्रासननिषण्णे मन्त्रिराक्षस उवाच ।' देव नायं ब्राह्मणः पात्रयोग्यः' इत्यभिधाय तत्साधकानि स्मृतिवाक्यानि पठितवान् । शकटारः शूद्रोऽयं वैदिकमपीदं कार्यमनुसंधाय राज्ञो धर्मबाधां कुरुते इतिचोक्तवान् । तच्च मन्त्रिराक्षसस्य वचनं श्रुत्वा जातामर्षेण नन्देन राज्ञा दुर्दैवादेशितेन पात्रासनादवतार्य साधिक्षेपं ब्राह्मणश्चाणक्यो वहिर्निस्सारितः । ततश्च तं चाणक्यं तथाविधानात्क्रुद्धं नन्दवधे कृतप्रतिज्ञं विज्ञाय शकटारो मन्त्री कृतकृत्यो देहत्यागं कर्तुं काशीं जगाम । तथाहि—

विचक्षणा परित्राता चाणक्यश्च परीक्षितः ॥
बुद्ध्यैव शकटारेण वैरमुद्धृतमघ्नता ॥ ६

पुरुषपरीक्षा.

( ५६ )

## शुद्धविष्कंभकः

दाल्म्यायनः—

न ब्रह्मविद्यां न च राजलक्ष्मी-
स्तथा यथेयं कविता कवीनाम् ॥
लोकोत्तरे पुंसि निवेश्यमाना
पुत्रीव हर्षं हृदये करोति ॥ १ ॥

( इति पठित्वा साकूतम् ) साधूक्तमनेन। तथाहि। भूपतिरयं जनकोऽपि सकललोचनारविन्दमार्तण्डे क्वचिदपि पुरुषप्रकाण्डे निजां कन्यां समर्पयितुकामोऽस्मद्गुरूपदिष्टायां ब्रह्मविद्यायां कुलक्रमागतायां राजलक्ष्म्यां च शिथिलादरः संवृत्तः। ( पुनः कर्णं दत्वा ) कथमयमाकाशे वीणाध्वनिःश्रूयते। तन्नूनमस्मद्गुरुमभ्यागच्छता समीरसंघट्टनकलक्वणद्वल्लकीगुणेन देवर्षिणा नारदेन भवितव्यम्। ( विलोक्य ) कथं ध्वनिसादृश्येन प्रतारितोऽस्मि ? नन्वयं गगनतलालम्बिनोर्मधुकरयोरेव ध्वनिराकर्ण्यते। ( पुनः कर्णं दत्वा सहर्षविस्मयम् ) अहो भगवतो योगीश्वरस्य प्रसादमहिमा। येनाहमेवंविधानामपि वचनाववोधमधुरां सिद्धिमासादितवानस्मि। तदाकर्णयामि किमेतावालपतः। ( कर्णं दत्वा ) एकः किमाह ' सखे कलालाप, कुत आगतोऽसि ?' अपरः किमाह ' वयस्य मधुरप्रिय सन्ततविकस्वराच्चन्द्रमौलिमन्दाकिनीकुमुदकाननात्'। अहो अनयोश्चतुरालापपेशलता रुचिरनामधेयता च। ( पुनः-

कर्णं दत्वा ) किमाह मधुरप्रियः ' अस्ति नवीनः कोऽपि वृत्तान्तः ?' किमाह कलालापः–' अस्ति । अचिरमेव कदापि खलु बलिनन्दनो बाणासुरः कमलमालया भगवन्तमिन्दुमौलिमभ्यर्च्य सविनयमिदमूचिवान् । यत्किल भगवन्,

कैलासाधिकसारं किमस्ति वस्तु महीतले ॥
यस्मिन्सफलतामेति मम दोर्दण्डमण्डलम् ॥ २ ॥

ततश्च विहस्येदमाह च भगवानिन्दुमौलिः–

अस्ति मे कार्मुकं दिव्यं न्यस्तं जनकभूभुजि ॥
यस्य बाणानले तिस्रः पुरः प्राप्ताः पतङ्गताम् ॥ ३ ॥

तदाकर्ण्य च तत्कार्मुकं विलोकयितुं स तत्र गतः । अहमिहागतः । कुतः पुनस्त्वमिह ? कथय कीदृशो वा तत्र नवीनो वृत्तान्तः ? इति' किमाह मधुरप्रियः–' अहमागतोऽस्मि नन्दनवनात् । अपि च तत्र मया लङ्केश्वरानुचरस्य गर्जितमाकर्णितम्–' आः कथं रे, नन्दनवनस्य रक्षिणोऽनर्चितचन्द्रचूड एव निशाचरचक्रवर्तिनि लूनसकलप्रसूनं नन्दनवनमिति । ततस्तैरिदमुक्तो निशाचरः– क्षन्तव्यमेतत् । अद्य हि जनकराजकन्यकावीरस्वयंवरविलोकनकुतुकितसकलसुरलोकविमानमण्डनाय महान्कुसुमोपयोगः । तदाकर्ण्य चेममेव वृत्तान्तमुपायनीकरोमि लङ्केश्वरस्येति प्रचलितो निशाचरः । अहमपि कौतुकादिहागतोऽस्मि' । ( सविषादम् ) अहो महाननर्थाङ्कुरोद्भेदो यदयं बाणरावणयोः कर्णान्तिकमपि विश्रान्तः सीतास्वयंवरवृत्तान्तः । अथवा । अलमतिकातरतया । भ्रमारोपिता अपि भ्रमरोक्तयः संभवन्ति । ( विमृश्य ) कुतो वा भ्रमरसंभावना ।

मकरन्दरसस्यन्दसुन्दरोद्गारधारिणौ ॥
श्रवणानन्दिनावेतौ वन्दिनाविव राजतः ॥ ४ ॥

( नेपथ्ये )

साधु भगवन्, विज्ञातं नन्दितावेव खल्वावां नानादिगन्तसमागतनृपतिचक्रवर्णनाय जनकेन समादिष्टौ ।

दाल्भ्यायन:–अहो घुणाक्षरन्यायो यदिदं भ्रमरद्वयं प्रति मयोक्तं बन्दिद्वयं प्रति फलितं वचः । भवतु तमिमं वृत्तान्तमस्मद्गुरवे निवेदयामि । ( इति-निष्क्रान्तः )

प्रसन्नराघवम्

( ५७ )

## उत्तरगोग्रहणम्.

( ततः प्रविशति वृद्धगोपालक )

वृद्धगोपालकः—गावो मे अहीनवत्सा भवन्तु । अविधवाश्च गोपयुवतयो भवन्तु । अस्माकं राजा विराट एकच्छत्रपृथिवीपतिर्भवतु । महाराजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्यां नगरोपवनवीथ्यामायान्तु गोधनं सर्वे च कृतमङ्गलमोदका गोपदारका दारिकाश्च तावत् । एषु ज्यैष्ठ्यं गत्वानुभविष्यामि । ( विलोक्य ) किं नु खल्वेष वायसः शुष्कवृक्षमारुह्य शुष्कशाखानिघट्टिततुण्डमादित्याभिमुखं विस्वरं विलपति । शान्तिर्भवतु । शान्तिर्भवतु अस्माकं गोधनस्य च । यावदेषु ज्यैष्ठ्यं गत्वा गोपदारकाणां दारिकाणां व्याहरामि । गोमित्रक ! गोमित्रक !

प्रविश्य.

गोमित्रकः—मातुल । वन्दे ।

वृद्धगोपालकः—शान्तिर्भवतु शान्तिर्भवतु अस्माकं गोधनस्य च । अरे गोमित्रक । महाराजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्यां नगरोपवन-

वीथ्यामायान्तु गोधनं सर्वे च कृतमङ्गलमोदका दारका दारिकाश्च । अरे गोमित्रक । गोपदारकाणां दारिकाणां व्याहर ।

गोमित्रकः—यन्मातुल आज्ञापयति । गोरशिणिके ! घृतपिण्ड ! स्वामिनि ! वृषभदत्त ! कुम्भदत्त ! महिषदत्त ! आगच्छत आगच्छत शीघ्रम्

( ततः प्रविशन्ति सर्वे )

सर्वे—मातुल ! वन्दामहे ।

वृद्धगोपालकः—शान्तिर्भवतु शान्तिर्भवतु अस्माकं गोपदारकाणां दारिकाणां च । महाराजस्य विराटस्य वर्षवर्धनगोप्रदाननिमित्तमस्यां नगरोपवनवीथ्यामायातु गोधनम् । तावन्तीं वेलां गायन्तो नृत्यन्तो भवामः ।

सर्वे—यन्मातुल आज्ञापयति । ( सर्वे नृत्यन्ति । )

वृद्धगोपालकः—ही ही सुष्टु नर्तितं सुष्ठु गीतं यावदहमपि नृत्यामि ।

सर्वे—हा हा मातुल ! अतिमहान्रेणुरुत्पातितः ।

वृद्धगोपालकः—न खलु रेणुरेव शंखदुन्दुभिघोष उत्पातितः ।

सर्वे—दिवा चन्द्रप्रभापाण्डुरज्योत्स्नावगुण्ठितः शीतमण्डलः सूर्योऽस्ति नास्ति च ।

गोमित्रकः—हा हा मातुल ! एते केऽपि मनुष्या दधिपिण्डपाण्डुरैश्छत्रैर्घोटकशकटिकामारुह्य सर्वे घोषं विद्रवन्ति चोराः ।

वृद्धगोपालकः—ही ही शरसंपाता उत्थिताः । दारका दारिकाः शीघ्रं पक्कणं प्रविशत ।

सर्वे—यन्मातुल आज्ञापयति । ( निष्क्रान्ताः । )

वृद्धगोपालकः—हा हा तिष्ठत तिष्ठत । प्रहरत प्रहरत । गृण्हीत गृण्हीत । इमं वृत्तान्तं महाराजविराटाय निवेदयिष्यामः ।

( इति निष्क्रान्तः । )

**प्रवेशकः ।**

( ततः प्रविशति भटः । )

भटः—भो भो निवेद्यतां निवेद्यतां महाराजाय विराटेश्वराय एता हि दस्युकर्मप्रच्छन्नविक्रमैर्धार्तराष्ट्रैर्ह्रियन्ते गाव इति । तत्र हि—

द्रुतैश्च वत्सैर्व्यथितैश्च गोगणै—
र्निरीक्षणत्रस्तमुखैश्च गोवृषैः ॥
कृतार्तनादाकुलितं समन्ततो
गवां कुलं शोच्यमिहाकुलाकुलम् ॥ १ ॥

इति ।

( नेपथ्ये )

किं धार्तराष्ट्रैरिति ।

भटः—आर्य अथ किम् ?

( प्रविश्य )

काञ्चुकीयः—सदृशमेतद्भ्रातृजनेष्वपि द्रोहिणाम् ।

सज्जैश्चापैर्बद्धगोधाङ्गुलित्रा
वर्मच्छन्नाः कल्पितस्यन्दनस्थाः ॥
वीर्योत्सिक्ता युद्धसज्जाः कृतास्त्रा
राज्ञो वैरं गोषु निर्यातयन्ती ॥ २ ॥

जयसेन ! जन्मनक्षत्रक्रियाव्यापृतस्य महाराजस्य तावदकालनिवेदनं मन्युमुत्पादयति । तस्मात्पुण्याहावसाने निवेदयिष्ये ।

भटः—आर्य अतिपातिकार्यमिदं शीघ्रं निवेद्यताम ॥

काञ्चुकीयः—इदं निवेद्यते ।

( ततः प्रविशति राजा )

मा तावद्व्यथितविकीर्णबालवत्सा
गावो मे रथरवशङ्कया ह्रियन्ते ॥
पीनांसश्चलवलयः सचन्दनार्द्रो
निर्लज्जो मम च करः कराणि भुङ्क्ते ॥ ३ ॥

जयसेन! जयसेन!

( प्रविश्य )

भटः—जयतु जयतु महाराजः ।

राजाः—अलं महाराजशब्देन । अवधूतं मे क्षत्रियत्वम् । उच्यतां रणविस्तरः ।

भटः—न विस्तरार्हाणि विप्रियाणि । एष समासः ।

एकवर्णेषु गात्रेषु गवां स्यन्दनरेणुना ॥
कशापातेषु दृश्यन्ते नानावर्णविभक्तयः ॥ ४ ॥

राजाः—तेन हि—

धनुरुपनय शीघ्रं कल्प्यतां स्यन्दनो मे
मम गतिमनुयातु च्छन्दतो यस्य भक्तिः

रणशिरसि गवार्थे नास्ति मोघः प्रयत्नो
निधनमपि यशः स्यान्मोक्षयित्वातु धर्मः।

भटः——यदाज्ञापयति महाराजः। ( निष्क्रान्तः )

राजा—भोः। किं नु खलु दुर्योधनस्य मामन्तरेण वैरम्। आ यज्ञमनुभवितुमनागंत इति। कथमनुभवामि। कीचकानां विनाशेन वयमुन्नीतसन्तापाः संवृत्ताः। अथवा परोक्षमपि पाण्डवानां स्निग्ध इति सर्वथा योद्धव्यम्। हस्तिनापुरनिवासाच्छीलज्ञो भगवान्दुर्योधस्य। अथवा——

कामं दुर्योधनस्यैष न दोषमभिधास्यति॥
अर्थित्वादपरिश्रान्तः पृच्छत्येव हि कार्यवान्॥ ६॥

कोऽत्र

( प्रविश्य )

भटः——जयतु महाराजः।

राजा—भगवांस्तावदाहूयताम्।

भटः—यदाज्ञापयति महाराजः। ( निष्क्रान्तः )

( ततः प्रविशति भगवान् )

भगवान्—( सर्वतो विलोक्य ) भोः! किं नु खल्विदम्।

गजेन्द्राः कल्प्यन्ते तुरगपतयो वर्मरचिताः
रथाः सानूकर्षाः कृतपरिकरा योधपुरुषाः॥

समुद्योगं दृष्ट्वा भयमननुभूतं स्पृशति मां
न खल्वात्मन्यस्तं कृतमतिरहं ते तु चपलाः ॥ ७ ॥

राजा–जयतु भगवान्। जयतु विराटो भगवान्। अभिवादये।

भगवान्–स्वस्ति।

विराटः—भगवन्! एतदासनमास्यताम्!

भगवान्–( उपविश्य। भो राजन् )

उद्योगः प्रस्तुतः कस्माच्छ्रीर्न सन्तोषमृच्छति ॥
पीडयिष्यति सोत्सेकान्पीडितान्मोक्षयिष्यति ॥ ८ ॥

राजा–भगवन्! गोग्रहणादवमानितोऽस्मि।

भगवन्–केन कारणेन।

राजा–धार्तराष्ट्रैः।

भगवान्– ( आत्मगतम् ) भोः कष्टम्।

एकोदकत्वं खलु नाम लोके
मनस्विनां कम्पयते मनांसि ॥
वैरप्रियैस्तैर्हि कृतेऽपराधे
यत्सत्यमस्माभिरिवापराद्धम् ॥ ९ ॥

विराटः—भगवन्। किमिदानीं विचार्यते।

भगवान्—न खलु किञ्चित्। तेषां समुत्सुकः।

राजा—अद्य प्रभृति निभृता भविष्यन्ति। यदि शक्तोऽपि युधिष्ठिरो मर्षयति। अहं न मर्षयामि।

भगवान्—( आत्मगतम् )

अद्येदानीं पर्णशय्या च भूमौ
राज्यभ्रंशो द्रौपदीधर्षणं वा ॥
वेषान्यत्वं संश्रितानां निवासः
सर्वं श्लाघ्यं यत्क्षमा ज्ञायते मे ॥ १० ॥

( प्रविश्य )

भटः—जयतु महाराजः ।

राजा—अथ किं चेष्टते दुर्योधनः ?

भटः—न खलु दुर्योधन एव पृथिव्यां राजानः सर्वे प्राप्ताः ।

द्रोणश्च भीष्मश्च जयद्रथश्च
शल्योऽङ्गराजः शकुनिः कृपश्च ॥
तेषां रथोत्कम्पचलत्पताकै
भग्ना ध्वजैरेव वयं न बाणैः ॥ ११ ॥

राजा—( उत्थाय कृताञ्जलिः ) कथं तत्रभवान्गाङ्गेयोऽपि प्राप्तः ।

भगवान्—साधु धर्षितेनापि नातिक्रान्तः समुदाचारः ।
( आत्मगतम् ) भोः

किमर्थं खलु सम्प्राप्तः कुरूणां गुरुरुत्तमः ॥
शङ्के तीर्णा प्रतिज्ञेति स्मारणं क्रियते मम ॥ १२ ॥

राजा—कोऽत्र ?

भटः–( प्रविश्य ) जयतु महाराजः

विराट–:सूतस्तावदाहूयताम् ।

भटः–यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

( प्रविश्य )

सूतः–जयत्वायुष्मान् ।

विराटः—

रथमानय शीघ्रं मे श्लाघ्यः प्राप्तो रणातिथिः ॥
तोषयिष्ये शरैर्भीष्मं जेष्यामीत्यमनोरथः ॥ १३ ॥

सूतः—यदाज्ञापयत्यायुष्मान् । आयुष्मन् !

रिपूणां सैन्यभेदेषु यस्ते परिचितो रथः ॥
रथचर्यां वहिष्कर्तुं तमास्थायोत्तरो गतः ॥ १४ ॥

विराटः—कथं निर्यातः कुमारः ।

भगवान्–भो राजन् ! संवार्यतां संवार्यतां कुमारः ।

अगणितगुणदोषो युद्धतीक्ष्णश्च बाल्यान्–
न च न दहति कश्चित्सन्निकृष्टो रणाग्निः ॥
अथ च परिहरन्ते धार्तराष्ट्रा न किञ्चित्
न खलु परिभवात्ते युद्धदोषान्ब्रवीमि ॥ १५ ॥

राजा—तेन हि शीघ्रमन्यो रथो कल्प्यताम् ।

सूतः—यदाज्ञापयत्यायुष्मान् ।

राजा—अथवा एहि तावत्।

सूतः—आयुष्मन्। अयमस्मि।

राजा—

त्वमिदानीं कुमारस्य किं न वाहितवान्रथम्॥
अनुज्ञातोऽसि किं तेन न राज्ञां सारथिर्भवान्॥ १६॥

सूतः—प्रसीदत्वायुष्मान्। रथं कल्पयित्वा तु सूतसमुदाचारेणोपस्थितः खल्वहम्। कुमारेण—

किं नु तत्परिहासार्थं किं नु तत्रास्ति कौशलम्॥
मामतिक्रम्य सारथ्ये विनियुक्ता बृहन्नला॥ १७॥

भगवान्—राजन्! अलमलं संभ्रमेण—

यदि स्वचक्रोद्धतरेणुदुर्दिनं
रथं समास्थाय गता बृहन्नला॥
परान्क्षणैर्नेमिरवैर्निवारयन्
विनापि बाणान्रथ एव जेष्यति॥ १८॥

राजा—तेन हि शीघ्रमन्यो रथः कल्प्यताम्।

सूतः—यदाज्ञापयत्यायुष्मान्। (निष्क्रान्तः)

(प्रविश्य)

भटः—भग्नः खलु कुमारस्य रथः।

राजा—कथं भग्नो नाम।

भटः—श्रोतुमर्हति महाराजः।

बहुभिः समराभिज्ञैराच्छिन्नोऽश्वपथः परैः ॥
भग्नो वाहनलोभेन श्मशानाभिमुखो रथः ॥ १९ ॥

भगवान्–( आत्मगतम् ) आः अत्र खलु गाण्डीवम् । ( प्रकाशम् ) भो राजन् ।

निमित्तं किञ्चिदुत्पन्नं श्मशानाभिमुखे रथे ॥
धार्तराष्ट्राः स्थिता यत्र श्मशानं तद्भविष्यति ॥ २० ॥

राजा—भगवन् ! अकाले स्वस्थवाक्यं मन्युमुत्पादयति ।

भगवान्—अलं मन्युना । कदाचिदनृतं नोक्तपूर्वम् ।

राजा—आ अस्त्येतत् । गच्छ भूयो ज्ञायतां वृत्तान्तः ।

भटः—यदाज्ञापयति महाराजः । ( निष्क्रान्तः )

( प्रविश्य )

भटः—जयतु महाराजः । श्मशाने मुहूर्तविश्रान्ततुरगेण कुमारेण तु–

भगवान्—एष मामनृतवादिनं न कुर्यात् ।

भटः—

कृता नीला नागा शरशतनिपातेन कपिला
हयो वा योधो वा न वहति न कश्चिच्छरशतम् ॥
शरैः स्तम्भीभूताः शरपरिकराः स्यन्दनवराः
शरैश्छन्ना मार्गाः स्रवति धनुरुग्रां शरनदीम् ॥ २१ ॥

भगवान्—( आत्मगतम् )

एतदक्षयतूणीत्वं येन शक्रस्य खाण्डवे ॥
यावन्त्यः पतिता धारास्तावन्तः प्रेषिताः शराः ॥ २२ ॥

राजा–अथ परेष्विदानीं को वृत्तान्तः

भटः–अप्रत्यक्षं हि तत्र मे । प्रवृत्तिपुरुषाः कथयन्ति

धनुर्घोषं द्रोणस्तदिदमिति बुद्ध्वा प्रतिगतः
ध्वजे बाणं दृष्ट्वा कृतमिति न भीष्मः प्रहरति ॥
शरैर्भग्नः कर्णः किमिदमिति चान्ये नृपतयो
भयेऽप्येको बाल्यान्नभयमभिमन्युर्गणयति ॥ २४ ॥

भगवान्—कथमभिमन्युः प्राप्तः । भो राजन् ।

युद्ध्यते यदि सौभद्रस्तेजोऽग्निर्वंशयोर्द्वयोः ॥
सारथिः प्रेष्यतामन्यो विक्लवात्र बृहन्नला ॥ २५ ॥

राजा–मा मा भवानेवम् ।

भीष्मं रामशरैरभिन्नकवचं द्रोणं च मन्त्रायुधम्
कृत्वा कर्णजयद्रथौ च विमुखौ शेषांश्च तांस्तान्नृपान् ॥
सौभद्रं स्वशरैर्न धर्षयति किं गीतः पितुः प्रत्ययात्
संसृष्टोऽपि वयस्यभावसदृशं तुल्यं वयो रक्षति ॥ २६ ॥

भट–एष खलु कुमारस्य रथः ।

आलम्बितो भ्रमति धावति तेन मुक्तो
न प्राप्य धर्षयति नेच्छति विप्रकर्तुम् ॥
आसन्नभूमिचपलः परिवर्तमानो
योग्योपदेशमिव तस्य रथः करोति ॥ २७ ॥

राजा–गच्छ भूयो ज्ञायतां वृत्तान्तः ।

भटः–यदाज्ञापयति महाराजः

( निष्क्रम्य प्रविश्य )

जयतु महाराजः । जयतु विराटेश्वरः । प्रियं निवेदये महाराजाय अवजितं गोग्रहणम् । अपयाता धार्तराष्ट्राः ।

भगवान्—दिष्ट्या भवान्वर्धते ।

राजा—न न भगवतो वृद्धिरेषा । अथ कुमार इदानीं क्व ?

भटः—दृष्टं परिस्पन्दानां योधपुरुषाणां कर्माणि पुस्तकमारोपयति कुमारः ।

ताडितस्य हि योधस्य श्लाघनीयेन कर्मणा ॥
अकालान्तरिता पूजा नाशयत्येव वेदनाम् ॥ २७ ॥

अथ बृहन्नलेऽदानीं क्व ?

भटः—प्रियनिवेदनार्थमभ्यन्तरं प्रविष्टा ।

राजा—बृहन्नला तावदाहूयताम् ।

भटः—यदाज्ञापयति महाराजः ।

( ततः प्रविशति बृहन्नला )

बृहन्नला—( निरूप्य सविमर्शम् )

गाण्डीवेन मुहूर्तमाततगुणेनासीत्प्रतिस्पर्धितं
बाणानां परिवर्तनेष्वविशदा मुष्टिर्न मे संहता ॥
गोधास्थानगता न चास्ति पटुता स्थाने हृतं सौष्ठवं
स्त्रीभावाच्छिथिलीकृतः परिचयादात्मा तु पश्चात्स्मृतः ॥ २९ ॥

मया हि—

अनेन वेषेण नरेन्द्रमध्ये
लज्जायमानेन धनुर्विकृष्टम् ॥

यात्रा तु तावच्छरयुर्दिनेषु
शीघ्रं निमग्नः कलुषश्च रेणुः ॥ ३० ॥

भोः !

जित्वापि गां विजयमप्युपलभ्य राज्ञो
नैवास्ति मे जयगतो मनसि प्रहर्षः ॥
दुःशासनं समरमूर्धनि संनिगृह्य
बध्द्वा यदद्य न विराटपुरं प्रविष्टः ॥ ३१ ॥

उत्तराप्रीतिदत्तालङ्कारेण व्रीडित इवास्मि राजानं द्रष्टुम्। तस्माद्विराटेश्वरं पश्यामि । अये! अयमार्यो युधिष्ठिरः।

सयौवनः श्रेष्ठतपोवने रतो
नरेश्वरो ब्राह्मणवृत्तिमाश्रितः ॥
विमुक्तराज्योऽप्यभिवर्द्धितः श्रिया
त्रिदण्डधारी न च दण्डधारकः ॥ ३२ ॥

(उपगम्य) भगवन् ! अभिवादये !

भगवान्—स्वस्ति ।

बृहन्नला—जयतु भर्ता ।

राजा—

अकारणं रूपमकारणं कुलं
महत्सु नीचेषु च कर्म शोभते ॥
इदं हि रूपं परिभूतपूर्वकं
तदेव भूयो बहुमानमागतम् ॥ ३६ ॥

बृहन्नले ! परिश्रान्तामपि भवतीं भूयः परिश्रमयिष्ये । उच्यतां रण-विस्तरः ।

बृहन्नला– श्रृणोतु भर्ता ।

राजा—ऊर्जितं कर्म । सविस्तरमभिधीयताम् ।

बृहन्नला–श्रोतुमर्हति महाराजः ।

( प्रविश्य )

भटः—जयतु महाराजः !

राजा—

अपूर्व इव ते हर्षो ब्रूहि केनापि विस्मितः ॥

भटः–

अश्रद्धेयं प्रियं प्राप्तं सौभद्रो ग्रहणं गतः ॥ ३४ ॥

बृहन्नला–कथं गृहीतः ( स्वगतम् )

तुलितबलं मयाद्य सैन्यं
परिगणितं च रणेऽद्य मे स दृष्टः ॥
सदृश इह तु तेन नास्ति कश्चित्
क इह भवेन्निहतेषु कीचकेषु ॥ ३५ ॥

भगवान्–बृहन्नले ! किमेतत् ?

बृहन्नला–भगवन् !

न जाने तस्य जेतारं बलवाञ्शिक्षितस्तु सः ॥
पितॄणां भाग्यदोषेण प्राप्नुयादपि धर्षणम् ॥ ३६ ॥

राजा—कथमिदानीं गृहीतः ।

भटः—

रथमासाद्य निःशङ्कं बाहुभ्यामवतारितः॥

राजा—केन ।

ईश्वरेण नियुक्तेन बहुधूमे महानसे ॥ ३७ ॥

बृहन्नला—( अपवार्य ) एवमार्यभीमेन परिष्वक्तः । न गृहीतः ।

दूरस्था दर्शनादेव वयं संतोषमागताः ॥
पुत्रस्नेहस्तु निर्दिष्टो येन सुव्यक्तकारिणा ॥ ३८ ॥

राजा—तेन सत्कृत्य प्रवेश्यतामभिमन्युः ।

भगवान्—भो राजन् । वृष्णिपाण्डवनाथस्याभिमन्योः पूजा भयादिति लोको ज्ञास्यति । तदवधीरणमस्य न्याय्यम् ।

राजा—नावधीरणमर्हति यादवीपुत्रः । कुतः;

पुत्रो ह्येष युधिष्ठिरस्य तु वयस्तुल्यो हि नः सूनुना
सम्बन्धो द्रुपदेन नः कुलगतो नप्ता हि तस्माद्भवेत् ॥
जामातृत्वमदूरतोऽपि च भवेत्कन्यापितृत्वं हि नः
पूजार्होऽप्यतिथिर्भवेत्स्वविभवैरिष्टा हि नः पाण्डवाः ॥ ३९ ॥

भगवान्—एवमेतत् । वक्तव्यं परिहर्तव्यं च ।

राजा—केनायं प्रवेशयितव्यः ।

भगवान्—बृहन्नलया प्रवेशयितव्यः ।

राजा—बृहन्नले, प्रवेश्यतामभिमन्युः ।

बृहन्नला—यदाज्ञापयति महाराजः । ( आत्मगतम् ) चिरस्य खल्वाकाङ्क्षितोऽयं नियोगो लब्धः ।

भगवान्–( आत्मगतम् )

अद्येदानीं यातु संदर्शनं वा
शून्ये दृष्ट्वा गाढमालिङ्गनं वा
स्वैरं तावद्यातुमुद्बाष्पतां वा
मत्प्रत्यक्षं लज्जते ह्येष पुत्रः ॥ ४० ॥

राजा—पश्यतु भवान्कुमारस्य कर्म ।

नृपा भीष्मादयो भग्नाः सौभद्रो ग्रहणं गतः ।
उत्तरेणाद्य संक्षेपादर्थतः पृथिवी जिता ॥ ४१ ॥

( ततः प्रविशति भीमसेनः )

भीमसेनः–

आदीपिते जतुगृहे स्वभुजावसक्ता
मद्भ्रातरश्च जननी च मयोपनीताः ॥
सौभद्रमेकमवतार्य रथात्तु बालं
तं च श्रमं प्रथममद्य समं हि मन्ये ॥ ४२ ॥

इत इतः कुमारः ।

( ततः प्रविशत्यभिमन्युः )

अभिमन्युः—भोः ! को नु खल्वेषः ।

विशालवक्षास्तनिमार्जितोदरः
स्थिरोन्नतांसोरुमहान्कटीकृशः ॥

इहाहतो येन भुजैकयन्त्रितो
बलाधिकेनापि न चास्मि पीडितः ॥ ४३ ॥

बृहन्नला—इत इतः कुमारः ।

अभिमन्युः—अये अयमपरः कः ?

अयुज्यमानैः प्रमदाविभूषणैः
करेणुशोभाभिरिवार्पितो गजः ॥
लघुश्च वेषेण महानिवौजसा
विभात्युमावेषमिवाश्रितो हरः ॥ ४४ ॥

बृहन्नला—( अपवार्य ) इममिहानयता किमिदानीमार्येण कृतम् ।

अवजित इति तावद्दूषितः पूर्वयुद्धे
दयितसुतवियुक्ता शोचनीया सुभद्रा ॥
जित इति पुनरेनं रुष्यते वासुभद्रो
भवतु बहु किमुक्त्वा दूषितो हस्तसारः ॥ ४५ ॥

भीमसेनः—( अपवार्य )

जानाम्येतान्निग्रहादस्य दोषान्
को वा पुत्रं मर्षयेच्छत्रुहस्ते ॥
इष्टापत्त्या किं तु दुःखे हि मग्ना
पश्यत्वेनं द्रौपदीत्याहतोऽयम् ॥ ४६ ॥

बृहन्नला—( अपवार्य ) आर्य ! अभिभाषणकौतूहलं मे महत् । वाचालयत्वेनमार्यः

भीमसेनः–बाढम् । अभिमन्यो ! रुष्यत्येष मया । त्वमेवैनमभिभाषय ।

बृहन्नला–अभिमन्यो !

अभिमन्युः–कथं कथम् । अभिमन्युर्नामाहम् । भोः ।

नीचैरप्यभिभाष्यन्ते नामभिः क्षत्रियान्वयाः॥
इहायं समुदाचारो ग्रहणं परिभूयते ॥ ४७ ॥

बृहन्नला–अभिमन्यो । सुखमास्ते ते जननी ।

अभिमन्युः–कथं कथं जननी नाम ।

किं भवान्धर्मराजो मे भीमसेनो धनञ्जयः॥
यन्मां पितृवदाक्रम्य स्त्रीगतां पृच्छसे कथाम् ॥ ४८ ॥

बृहन्नला–अभिमन्यो ! अपि कुशली देवकीपुत्रः केशवः ।

अभिमन्युः–कथं तत्रभवन्तमपि नाम्ना । अथ किम् । अथ किम् । कुशली भवता संसृष्टः।

( उभौ परस्परं विलोकयतः)

अभिमन्युः–कथमिदानीं सावज्ञमिव मां हस्यते ।

बृहन्नला–न खलु किञ्चित् ।

पार्थं पितरमुद्दिश्य मातुलं च जर्नादनम् ॥
तरुणस्य कृतास्त्रस्य युक्तो युद्धपराजयः ॥ ४९ ॥

अभिमन्युः––

अलमात्मस्तवं कर्तुं नास्माकमुचितं कुले ।
हतेषु हि शरान्पश्य नाम नान्यद्भविष्यति ॥ ५० ॥

बृहन्नला–( आत्मगतम् ) सम्यगाह कुमारः ।

सरथतुरगहस्तनागयोधे
शरनिपुणेन न कश्चिदप्यविद्धः ॥
अहमपि च परिक्षतो भवेयं
यदि न मया परिवर्तितो रथःस्यात् ॥ ५१ ॥

( प्रकाशम् ) एवं वाक्यशौण्डीर्यम् । किमर्थं तेन पदातिना गृहीतः ।

अभिमन्युः—

अशस्त्रो मामभिगतस्ततोऽस्मि ग्रहणं गतः ॥
न्यस्तशस्त्रं हि को हन्यादर्जुनं पितरं स्मरन् ॥ ५२ ॥

भीमसेनः—

धन्यः खल्वर्जुनो येन प्रत्यक्षमुभयं श्रुतम् ॥
पुत्रस्य च पितुः श्लाघ्यः संग्रामेषु पराक्रमः ॥ ५३ ॥

राजा–त्वर्यतां त्वर्यतामभिमन्युः ।

बृहन्नला–इत इतः कुमारः । एष महाराजः । उपसर्पतु कुमारः ।

अभिमन्यु–आः कस्य महाराजः ।

बृहन्नला–ब्राह्मणेन सहास्ते ।

अभिमन्युः—ब्राह्मणेनेति । भगवन् ! अभिवादये ।

भगवान्—एह्येहि वत्स !

शौण्डीर्यं धृतिविनयं दयां स्वपक्षे
माधुर्यं धनुषि जयं पराक्रमं च ॥

एकस्मिन्पितरि गुणवानवाप्नुहि त्वं
शेषाणां यदपि च रोचते चतुर्णाम् ॥ ५४ ॥

राजा—एह्येहि पुत्र ! कथं न मामभिवादयसि । अहो उत्सिक्तः खल्वयं क्षात्रियकुमारः । अहमस्य दर्पप्रशमनं करोमि । अथ केनायं गृहीतः ।

भीमसेनः—महाराज ! मया ।

अभिमन्युः—अशस्त्रेणेत्यभिधीयताम् ।

भीमसेनः—शान्तं पापम् । शान्तं पापम् ।

सहजौ मे प्रहरणं भुजौ पीनांसकोमलौ ॥
तावाश्रित्य प्रयुध्येयं दुर्बलैर्गृह्यते धनुः ॥ ५५ ॥

अभिमन्युः—मा तावद्भोः !

बाहुरक्षौहिणी यस्य निर्व्याजो यस्य विक्रमः ॥
किं भवान्मध्यमस्तातस्तस्यैतत्सदृशं वचः ॥ ५६ ॥

भगवान्—पुत्र ! कोऽयं मध्यमो नाम

अभिमन्युः—श्रूयताम् । नन्वनुत्तरा वयं ब्राह्मणेषु । साध्वन्यो ब्रूयात् ।

राजा—भवतु भवतु । मद्वचनात्पुत्र ! मद्वचनात्पुत्र कोऽयं
मध्यमो नाम ।

आभिमन्युः—श्रूयताम् । येन

तुञ्जयित्वा जरासन्धं कण्ठश्लिष्टेन बाहुना ॥
असत्यं कर्म तत्कृत्वा नीतः कृष्णोऽतदर्हताम् ॥ ५७॥

राजा—

न ते क्षेपेण रुष्यामि रुष्यता भवता रमे ॥
किमुक्त्वा नापराद्धोऽहं कथं तिष्ठति यात्विति ॥ ५८ ॥

अभिमन्युः–यद्यहमनुग्राह्यः,

पादयोः समुदाचारः क्रियतां निग्रहोचितः
बाहुभ्यामाहृतं भीमो बाहुभ्यामेव नेष्यति ॥ ५९ ॥

(ततः प्रविशत्युत्तरः)

उत्तरः—

मिथ्याप्रशंसा खलु नाम कष्टा
येषां तु मिथ्यावचनेषु भक्तिः ॥
अहं तु युद्धाश्रयमुच्यमानो
वाचानुवर्ती हृदयेन लज्जे ॥ ६० ॥

(उपसृत्य)

भगवन्, अभिवादये ।

भगवान्—स्वस्ति ।

उत्तरः—तात ! अभिवादये ।

राजा—एह्येहि पुत्र ! आयुष्मान्भव । पुत्र पूजिताः कृतकर्माणो योध-पुरुषाः ।

उत्तरः—पूजिताः । पूज्यमतस्य क्रियतां पूजा ।

राजा—पुत्र ! कस्मै ।

उत्तरः—इहात्रभवते धनञ्जयाय ।

राजा—कथं धनञ्जयायेति ।

उत्तरः—अथ किम् । अत्रभवता—

श्मशानाद्धनुरादाय तूणी चाक्षयसायके ॥
नृपा भीष्मादयो भग्ना वयं च परिरक्षिताः ॥ ६१ ॥

बृहन्नला—प्रसीदतु प्रसीदतु महाराजः ।

अयं बाल्यात्तु संभ्रान्तो न वेत्ति प्रहरन्नपि ॥
कृत्स्नं कर्म स्वयं कृत्वा परस्येत्यवगच्छति ॥ ६२

उत्तरः—अपनयतु भवाञ्शङ्काम् । इदमाख्यास्यते ।
प्रकोष्ठान्तरसङ्गूढं गाण्डीवज्याहतं किणम् ॥
यत्तद्द्वादशवर्षान्ते नैव याति सवर्णताम् ॥ ६३ ॥

बृहन्नला—

एतन्मे पारिहार्याणां व्यावर्तनकृतं किणम् ॥
सन्निरोधविवर्णत्वाद्रोधास्थानमिहागतम् ॥ ६४ ॥

राजा—पश्यामस्तावत् ।

बृहन्नला—

रुद्रबाणावलीढाङ्गो यद्यहं भारतोऽर्जुनः ॥
अव्यक्तं भीमसेनोऽयमयं राजा युधिष्ठिरः ॥ ६५ ॥

राजा—भो धर्मराज वृकोदर धनञ्जय ! कथं न मां विश्वसिथ ।
भवतु भवतु प्राप्तकाले बृहन्नले प्रविश त्वमभ्यन्तरम् ।

बृहन्नला—यदाज्ञापयति महाराजः ।

भगवम्—अर्जुन ! न खलु न खलु प्रवेष्टव्यम् । तीर्णप्रतिज्ञा वयम् ।

अर्जुनः—यदाज्ञापयत्यार्यः ।

राजा—

शूराणां सत्यसन्धानां प्रतिज्ञां परिरक्षताम् ॥
पाण्डवानां निवासेन कुलं मे नष्टकल्मषम् ॥ ६६ ॥

अभिमन्युः—इहात्रभवन्तो मे पितरः । तेन खलु—

न रुष्यन्ति मया क्षिप्ता हसन्तश्च क्षिपन्ति माम् ॥
दिष्ट्या गोग्रहणं स्वन्तं पितरो येन दर्शिताः ॥ ६७ ॥

( भीमसेनमुद्दिश्य ) भोस्तात !

अज्ञानात्तु मया पूर्वं यद्भवान्नाभिवादितः ॥
तस्य पुत्रापराधस्य प्रसादं कर्तुमर्हति ॥ ६८ ॥

भीमसेनः----एह्येहि पुत्र ! पितृसदृशपराक्रमो भव । पुत्र ! अभिवादयस्व पितरम् ।

अभिमन्युः----भोस्तात ! अभिवादये ।

अर्जुनः----एह्येहि पुत्र !

अयं स हृदयाह्लादी पुत्रगात्रसमागमः ॥
यत्तद्द्वादशवर्षान्ते प्रोषितः पुनरागतः ॥ ६९ ॥

पुत्र ! अभिवाद्यतां विराटेश्वरः ।

अभिमन्युः----अभिवादये ।

राजा----एह्येही वत्स ।

यौधिष्ठिरं धैर्यमवाप्नुहि त्वं
भैमं वलं नैपुणमर्जुनस्य ॥

माद्रीसुतात्कान्तिमथाभिरूप्यम्
कीर्तिं च कृष्णस्य जगत्प्रियस्य ॥ ७० ॥

( आत्मगतम् ) उत्तरासन्निर्षस्तु मां वाधते । किमिदानीं करिष्ये । भवतु दृष्टम् । ( आत्मगतम् ) कोऽत्र ।

( प्रविश्य )

भटः--जयतु महाराजः

राजा--आपस्तावत् ।

भटः--यदाज्ञापयति महाराजः ( निष्क्रम्य प्रविश्य ) इमा आपः ।

राजा—अर्जुन गोग्रहणविजयशुल्कार्थं प्रतिगृह्यतामुत्तरा ।

भगवान्—एतदवनतं शिरः ।

अर्जुनः—कथं चरित्रं मे तुलयति । भो राजन् ।

इष्टमन्तःपुरं सर्वं मातृवत्पूजितं मया ॥
उत्तरैषा त्वया दत्ता पुत्रार्थे प्रतिगृह्यते ॥ ७१ ॥

भगवान्—एतदुन्नतं शिरः ।

राजा--भवतु पितामहसकाशमुत्तरं प्रेषयामः । धर्मराज ! वृकोदर धनञ्जय ! इत इतो भवन्तः ।

महाकवेर्भासस्य.

( ५८ )

## रामावतारः

पृथिवीं शासतस्तस्य पाकशासनतेजसः ॥
किञ्चिदूनमनूनर्द्धेः शरदामयुतं ययौ ॥ १ ॥

न चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम् ॥
सुताभिधानं स ज्योतिः सद्यः शोकतमोऽपहम् ॥ २ ॥
अतिष्ठत्प्रत्ययापेक्षसन्ततिः स चिरं नृपः ॥
प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः ॥ ३ ॥
ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः ॥
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥ ४ ॥
तस्मिन्नवसरे देवा पौलस्त्योपप्लुता हरिम् ॥
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ ५ ॥
ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ॥
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ ६ ॥
भोगिभोगासनासीनं ददृशुस्तं दिवौकसः ॥
तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहम् ॥ ७ ॥
श्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले ॥
अङ्के निक्षिप्तचरणमास्तीर्णकरपल्लवे ॥ ८ ॥
प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ॥
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ ९ ॥
प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम् ॥
कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा ॥ १० ॥
बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः ॥
आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥ ११ ॥
दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः ॥
हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ॥ १२ ॥

मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ॥
उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥ १३ ॥
योगनिद्रान्तविशदैः पावनैरवलोकनैः ॥
भृग्वादीननुगृण्हन्तं सौखशायनिकानृषीन् ॥ १४ ॥
प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ॥
अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ १५ ॥
नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ॥
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ १६ ॥
रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ॥
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ १७ ॥
अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ॥
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥ १८ ॥
हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ॥
दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥ १९ ॥
सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ॥
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ २० ॥
सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम् ॥
सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ २१ ॥
चतुर्वर्गफलं ज्ञानं कालावस्था चतुर्युगा ॥
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ २२ ॥
अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ॥
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥ २३ ॥

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ॥
स्वपतो जागरूकस्य याथात्म्यं वेद कस्तव ॥ २४ ॥

शब्दादीन्विषयान्भोक्तुं चरितुं दुश्चरं तपः ॥
पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥ २५ ॥

बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ॥
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ २६ ॥

त्वय्यावेशितचित्तानां त्वत्समार्पितकर्मणाम् ॥
गतिस्त्वं वीतरागाणामभूयः सन्निवृत्तये ॥ २७ ॥

प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव ॥
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥ २८ ॥

केवलं स्मरणेनैव पुनासि पुरुषं यतः ॥
अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥ २९ ॥

उदधेरिव रत्नानि तेजांसीव विवस्वतः ॥
स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते ॥ ३० ॥

अनवाप्तमवाप्तव्यं न ते किंचन विद्यते ॥
लोकानुग्रह एवैको हेतुस्तु जन्मकर्मणोः ॥ ३१ ॥

महिमानं यदुत्कीर्त्य तव संह्रियते वचः ॥
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ ३२ ॥

इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ॥
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥ ३३ ॥

तस्मै कुशलसंप्रश्नव्यञ्जितप्रीतये सुराः ॥
भयमप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः ॥ ३४ ॥

अथ वेलासमासन्नशैलरन्ध्रानुवादिना ॥
स्वरेणोवाच भगवान्परिभूतार्णवध्वनिः ॥ ३५ ॥

पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ॥
बभूव कृतसंस्कारा चरितार्थैव भारती ॥ ३६ ॥

बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता ॥
निर्यातशेषा चरणाद्गङ्गेवोर्ध्वप्रवर्तिनी ॥ ३७ ॥

जाने वो रक्षसाक्रान्तावनुभावपराक्रमौ ॥
अङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ ॥ ३८ ॥

विदितं तप्यमानं च तेन मे भुवनत्रयम् ॥
अकामोपनतेनेव साधोर्हृदयमेनसा ॥ ३९ ॥

कार्येषु चैककार्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा ॥
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥ ४० ॥

स्वासिधारापरिहृतः कामं चक्रस्य तेन मे ॥
स्थापितो दशमो मूर्धा लभ्यांश इव रक्षसा ॥ ४१ ॥

स्रष्टुर्वरातिसर्गाच्च मया तस्य दुरात्मनः ॥
अत्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः ॥ ४२ ॥

धातारं तपसा प्रीतं ययाचे स हि राक्षसः ॥
दैवात्सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः ॥ ४३ ॥

सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम् ॥
करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम् ॥ ४४ ॥

अचिराद्यज्वभिर्भागं कल्पितं विधिवत्पुनः ॥
मायाविभिरनालीढमादास्यध्वे निशाचरैः ॥ ४५ ॥

वैमानिकाः पुण्यकृतस्त्यजन्तु मरुतां पथि ॥
पुष्पकालोकसंक्षोभमेघावरणतत्पराः ॥ ४६ ॥

मोक्ष्यध्वे स्वर्गबन्दीनां वेणीबन्धानदूषितान् ॥
शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः ॥ ४७ ॥

रावणावग्रहक्लान्तमिति वागमृतेन सः ॥
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥ ४८ ॥

पुरुहूतप्रभृतयः सुरकार्योद्यतं सुराः ॥
अंशैरनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ॥ ४९ ॥

अथ तस्य विशांपत्युरन्ते काम्यस्य कर्मणः ॥
पुरुषः प्रबभूवाग्नेर्विस्मयेन सहर्त्विजाम् ॥ ५० ॥

हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम् ॥
अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥ ५१ ॥

प्राजापत्योपनीतं तदन्नं प्रत्यग्रहीन्नृपः ॥
वृषेव पयसां सारमाविष्कृतमुदन्वता ॥ ५२ ॥

अनेन कथिता राज्ञो गुणास्तस्यान्यदुर्लभाः ॥
प्रसूतिं चकमे तस्मिंस्त्रैलोक्यप्रभवोऽपि यत् ॥ ५३ ॥

स तेजो वैष्णवं पत्न्योर्विभेजे चरुसंज्ञितम् ॥
द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ५४ ॥

अर्चिता तस्य कौशल्या प्रिया केकयवंशजा ॥
अतः संभावितां ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ५५ ॥

ते बहुज्ञस्य चित्तज्ञे पत्नौ पत्युर्महीक्षितः ॥
चरोरर्धार्धभागाभ्यां तामभोजयतामुभे ॥ ५६ ॥

सापि प्रणयवत्यासीत्सपत्न्योरुभयोरपि ॥
भ्रमरी वारणस्येव मदनिस्यन्दरेखयोः ५७

ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसंभवः ॥
सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥ ५८ ॥

सममापन्नसत्वास्ता रेजुरापाण्डुरत्विषः ॥
अन्तर्गतफलारम्भाः सस्यानामिव संपदः ॥ ५९ ॥

गुप्तं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः ॥
जलजासिगदाशार्ङ्गचक्रलाञ्छितमूर्तिभिः ॥ ६० ॥

हेमपक्षप्रभाजाले गगने च वितन्वता ॥
उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा ॥ ६१ ॥

बिभ्रत्या कौस्तुभं न्यासं स्तनान्तरविलम्बिनम् ॥
पर्युपासन्त लक्ष्म्या च पद्मव्यजनहस्तया ॥ ६२ ॥

कृताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः ॥
ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपतस्थिरे ॥ ६३ ॥

ताभ्यस्तथाविधान्स्वप्नाञ्छ्रुत्वा प्रीतो हि पार्थिवः ॥
मेने परार्ध्यमात्मानं गुरुत्वेन जगद्गुरोः ॥ ६४ ॥

विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा ॥
उवास प्रतिमाचन्द्रः प्रसन्नानामपामिव ॥ ६५ ॥

अथाग्रमहिषी राज्ञः प्रसूतिसमये सती ॥
पुत्रं तमोऽपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ ६६ ॥

राम इत्यभिरामेण वपुषा तस्य चोदितः ॥
नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥ ६७ ॥

रघुवंशप्रदीपेन तेनाप्रतिमतेजसा ॥
रक्षागृहगता दीपा प्रत्यादिष्टा इवाभवन् ॥ ६८ ॥

शय्यागतेन रामेण माता शातोदरी बभौ ॥
सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥ ६९ ॥

कैकय्यास्तनयो जज्ञे भरतो नाम शीलवान् ॥
जनयित्रीमलं चक्रे यः प्रश्रय इव श्रियम् ॥ ७० ॥

सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ॥
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥ ७१ ॥

निर्दोषमभवत्सर्वमाविष्कृतगुणं जगत् ॥
अन्वगादिव हि स्वर्गो गां गतं पुरुषोत्तमम् ॥ ७२ ॥

तस्योदये चतुर्मूर्तेः पौलस्त्यचकितेश्वराः ॥
विरजस्कैर्नभस्वद्भिर्दिश उच्छ्वसिता इव ॥ ७३ ॥

कृशानुरपधूमत्वात्प्रसन्नत्वात्प्रभाकरः ॥
रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ ७४ ॥

दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ॥
मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥ ७५ ॥

पुत्रजन्मप्रवेश्यानां तुर्याणां तस्य पुत्रिणः ॥
आरम्भं प्रथमं चक्रुर्देवदुन्दुभयो दिवि ॥ ७६ ॥

सन्तानकमयी वृष्टिर्भवने चास्य पेतुषी ॥
सन्मङ्गलोपचाराणां सैवादिरचनाभवत् ॥ ७७ ॥

कुमाराः कृतसंस्कारास्ते धात्रीस्तन्यपायिनः ॥
आनन्देनाग्रजेनेव समं ववृधिरे पितुः ॥ ७८ ॥

स्वाभाविकं विनीतत्वं तेषां विनयकर्मणा ॥
मुमूर्च्छ सहजं तेजो हविषेव हविर्भुजाम् ॥ ७९ ॥

परस्परविरुद्धास्ते तद्रघोरनघं कुलम् ॥
अलमुद्योतयामासुर्देवारण्यमिवर्तवः ॥ ८० ॥

समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ॥
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ ८१ ॥

तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन ॥
यथा वायुविभावस्वोर्यथा चन्द्रसमुद्रयोः ॥ ८२ ॥

ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ॥
मनो जह्रुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥ ८३ ॥

स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ॥
धर्मार्थकाममोक्षाणामवतार इवाङ्गभाक् ॥ ८४ ॥

गुणैराराधयामासुस्ते गुरुं गुरुवत्सलाः ॥
तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ ८५ ॥

सुरगज इव दन्तैर्भग्नदैत्यासिधारै-
र्नय इव पणबन्धव्यक्तयोगैरुपायैः ॥
हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥ ८६ ॥

रघुवंशः

( ५९ )

## शरद्वर्णनम् ।

अथ कदाचिद्विरलितबलाहके, चातकातङ्ककारिणि, क्वणत्कादम्बे, दर्दुरद्विषि, मयूरमदमुषि, हंसपथिकसार्थसर्वातिथौ, धौतासिनिभनभसि, भास्वरभास्वति, शुचिशशिनि, तरुणतारागणे, गलत्सुनासीरशरासने, सीदत्सौदामनीदाम्नि, दामोदरनिद्राद्रुहि, द्रुतवैदुर्यवर्णार्णसि, घूर्णमानमिहिकालघुमेघमोघमघवति, निमीलन्नीपे, निष्कुसुमकुटजे, निर्मुकुलकन्दले, कोमलकमले, मधुस्यन्दीन्दीवरे, कह्लाराह्लादिनि, शेफालिकाशीतलीकृतनिशे, यूथिकामोदिनि, मोदमानकुमुदावदातदशादिशि, सप्तच्छदधूलिधूसरितसमीरे, स्तबकितबन्धुरबन्धूकाबध्यमानाकाण्डसन्ध्ये, नीराजितवाजिनि, उद्दामदन्तिनि, दर्पक्षीबोक्षके, क्षीयमाणपङ्कचक्रवाले, बालपुलिनपल्लवितसिन्धुरोधसि,

परिणामश्यानश्यामाके, जनितप्रियङ्गुमञ्जरीरजसि, कठोरितत्रपुसत्वचि, कुसुमस्मेरशरे, शरत्समयारम्भे, राज्ञः समीपाद्बाणो बन्धून्द्रष्टुं पुनरपि तं ब्राह्मणाधिवासमगात् ।

हर्षचरितम्

( ६० )

## बाणस्य बन्धुजनसमागमः

समुपलब्धभूपालसंमानातिशयपरितुष्टास्तस्य ज्ञातयः श्लाघमाना निर्ययुः। क्रमेण च कांश्चिदभिवादयमानः, कैश्चिदभिवाद्यमानः, कैश्चिच्छिरसि चुम्ब्यमानः, कांश्चिन्मूर्ध्नि समाजिघ्रन्, कैश्चिदालिङ्ग्यमानः, कांश्चिदालिङ्गन्, अन्यैराशिषानुगृह्यमाणः, पराननुगृह्णन् बहुबन्धुमध्यवर्ती परं मुमुदे। संभ्रान्तपरिजनोपनीतं चासनमासीनेषु गुरुषु भेजे भजमानश्चार्चादिसत्कारं नितरां ननन्द । प्रियमाणेन च मनसा सर्वांस्तान्पर्यपृच्छत् । 'कच्चिदेतावतो दिवसान्सुखिनो यूयम् । अप्रत्यूहा वा सम्यक्करणपरितोषितद्विजचक्रा क्रातवी क्रियते क्रिया, यथावदविकलमन्त्रभाञ्जि भुञ्जते हवींषि हुतभुजः, यथाकालमधीयते वा बटवः, प्रतिदिनमविच्छिन्नो वा वेदाभ्यासः, कच्चित्स एव चिरन्तनो विद्याकर्मण्यभियोगः, तान्येव व्याकरणे परस्परस्पर्धानुबन्धावन्ध्यदिवसदर्शितादराणि, व्याख्यानमण्डलानि, सैव वा पुरातनी परित्यक्तान्यकर्तव्या प्रमाणगोष्ठी, स एव वा मन्दीकृतेतरशास्त्ररसो मीमांसायामतिरसः, कच्चित्त एव वाभिनवसुभाषितसुधावर्षिणः काव्यालापा ' इति ।

अथ ते तमूचुः—'तात, सन्तोषजुषां सततसन्निहितविद्याविनोदानां वैतानवह्निमात्रसहायानां कियन्मात्रं नः कृत्यं सुखितया सकलभुवनभुजि,

भुजङ्गराजदेहदीर्घे रक्षति क्षितिं क्षितिभुजो भुजे। सर्वथा सुखिन एव वयम्। विशेषेण तु त्वयि विमुक्तकौसीद्ये परमेश्वरपार्श्ववर्तिनि, वेत्रासनमधितिष्ठति। सर्वे च यथाशक्ति यथाविभवं यथाकालं च संपाद्यन्ते विप्रजनोचिताः क्रियाकलापाः।' इत्येवमादिभिरालापैः स्कन्धावारवार्ताभिश्च शैशवातिक्रान्तक्रीडानुस्मरणैः पूर्वजकथाभिश्च विनोदितमनास्तैः सह सुचिरमतिष्ठत्। उत्थाय च मध्यन्दिने यथाक्रियमाणाः स्थितीरकरोत्। भुक्तवन्तं च तं सर्वे ज्ञातयः पर्यवारयन्।

हर्षचरितम्

( ६१ )

## पौराणिकवर्णनम्

अत्रान्तरे दुगूलपट्टप्रभवे शिखण्ड्यपाङ्गपाण्डुनी पौण्ड्रे वाससी वसानः स्नानावसानसमये वन्दितया तीर्थमृदा गोरोचनया च रचिततिलकः, तैलामलकमसृणितमौलिः, अनुच्चचूडाचुम्बिना निबिडेन कुसुमापीडकेन समुद्भासमानः, असकृदुपयुक्तताम्बूलविमलाधरकान्तिः, एकशलाकाञ्जनजनितलोचनरुचिरचिरभुक्तः, विनीतमार्यं च वेषं दधानः, पुस्तकवाचकः सुदृष्टिराजगाम। नातिदूरवर्तिन्यामासन्द्यां निषसाद। स्थित्वा च मुहूर्तमिव तत्कालापनीतसूत्रवेष्टनमपि नखकिरणैर्मृदुमृणालसूत्रैरिव वेष्टितं पुस्तकं पुरोनिहितशरशलाकायन्त्रके निधाय, पृष्ठतः सनीडसंनिविष्टाभ्यां मधुकरपारावताभ्यां दत्तस्थानके प्राभातिकप्रपाठकच्छेदचिह्नीकृतमन्तरमुत्क्षिप्य गृहीत्वा च कतिपयपत्रलघ्वीं कपाटिकाम्, क्षालयन्निव मषीमलिनान्यक्षराणि दन्तकान्तिभिः, अर्चयन्निव सितकुसुममुक्तिभिर्ग्रन्थम, मुखसन्निहितसरस्वती नूपुररवैरिव गमकैर्मधुरैराक्षिपन्मनांसि श्रोतॄणां गीत्या पवनप्रोक्तं पुराणं पपाठ।

तस्मिंश्च तथा श्रुतिसुभगगीतिगर्भं पठति सुदृष्टौ नातिदूरवर्ती बन्दी सूचीबाणस्तारमधुरेण गीतिध्वनिमनुवर्तमानः स्वरेणेदमार्यायुगुलमपठत् ।

'तदपि मुनिगीतमतिपृथु तदपि जगद्व्यापि पावनं तदपि ।
हर्षचरितादभिन्नं प्रतिभाति हि मे पुराणमिदम् ॥ १ ॥
वंशानुगमविवादि स्फुटकरणं भरतमार्गभजनगुरु ।
श्रीकण्ठविनिर्यातं गीतमिदं हर्षराज्यमिव ॥ २ ॥

( ६२ )

## बाणस्यपितृव्यपुत्रवर्णनम्

तच्छ्रुत्वा बाणस्य चत्वारः पितामहमुखपद्मा इव वेदाभ्यासपवित्रितमूर्तयः उपाया इव सामप्रयोगललितमुखाः, गणपतिः, अधिपतिः, तारापतिः, श्यामल इति पितृव्यपुत्रा भ्रातरः, प्रसन्नवृत्तयः, गृहीतवाक्याः, गुरुकृतपदन्यासाः, न्यायवादिनः, सुकृतसंग्रहाभ्यासमुखाः, लब्धसाधुशब्दाः लोक इव व्याकरणेऽपि, सकलपुराणराजर्षिचरिताभिज्ञाः, महाभारतभावितात्मानः, विदितसकलेतिहासाः, महाविद्वांसः, महाकवयः, महापुरुषवृत्तान्तकुतूहलिनः, सुभाषितश्रवणरसरसायनाः, वितृष्णाः, वयसि वचसि यशसि तपसि सदसि महसि वपुषि यजुषि च प्रथमाः, पूर्वमेव कृतसंगराः, विवक्षवः, स्मितसुधाधवलितकपोलोदराः, परस्परस्य मुखानि व्यलोकयन् ।

हर्षचरितम्

( ६३ )

## पुरातननृपदोपदर्शनम्

अथ तेषां कनीयान्कमलदलदीर्घलोचनः श्यामलो नाम बाणस्य प्रेयान्प्राणानामपि वशयिता दत्तसंज्ञस्तैः सप्रणयं दशनज्योत्स्नास्नापितककुभा मुखेन्दुना

बभाषे—तात बाण, द्विजानां राजा गुरुदारग्रहणमकार्षीत् । पुरूरवा ब्राह्मणधनतृष्णया दयितेनायुषा व्ययुज्यत । नहुषः परकलत्राभिलाषी महाभुजङ्ग आसीत् । ययातिराहितब्राह्मणीपाणिग्रहणः पपात । सुद्युम्नः स्त्रीमय एवाभवत् । सोमकस्य प्रख्याता जन्तुवधनिर्घृणता । मान्धाता मार्गणव्यसनेन सपुत्रपौत्रो रसातलमगात् । पुरुकुत्सः कुत्सितं कर्म तपस्यन्नपि मेकलकन्यकायामकरोत् । कुवलयाश्वो भुजङ्गलोकपरिग्रहादश्वतरकन्यामपि न परिजहार । पृथुः प्रथमपुरुषकः परिभूतवान्पृथिवीम् । नृगस्य कृकलासभावे वर्णसंकरः समदृश्यत । सौदासेन न रक्षिता पर्याकुलीकृता क्षितिः । नलमवशाक्षहृदयं कलिरभिभूतवान् । संवरणो मित्रदुहितरि विक्लवतामगात् । दशरथ इष्टरामोन्मादेन मृत्युमवाप । कार्तवीर्यो गोब्राह्मणातिपीडनेन निधनमयासीत् । मरुत्त इष्टबहुसुवर्णकोऽपि देवद्विजबहुमतो न बभूव । शन्तनुरतिव्यसनादेकाकी वियुक्तो वाहिन्या विपिने विललाप । पाण्डुर्वनमध्यगतो मत्स्य इव मदनरसाविष्टः प्राणान्मुमोच । युधिष्ठिरो गुरुभयविषण्णहृदयः समरशिरसि सत्यमुत्सृष्टवान् , ।

( ६४ )

## हर्षश्रेष्ठत्ववर्णनम्

इत्थं नास्ति राजत्वमपकलङ्कमृते देवदेवादमुतः सर्वद्वीपभुजो हर्षात् । ...स्य हि बहून्याश्चर्याणि श्रूयन्ते, तथाहि अत्र बलजिता निश्चली-...ताश्चलन्तः कृतपक्षाः क्षितिभृतः । अत्र प्रजापतिना शेषभोगि-...ण्डलस्योपरि क्षमा कृता । अत्र पुरुषोत्तमेन सिन्धुराजं प्रमथ्य ...क्ष्मीरात्मीकृता । अत्र बलिना मोचितभूभृद्वेष्टनो मुक्तो महानागः ।

अत्र देवेनाभिषिक्तः कुमारः । अत्र स्वामिनैकप्रहारपातितारातिना प्रख्यापिता शक्तिः । अत्र नरसिंहेन स्वहस्तविशसितारातिना प्रकटीकृतो विक्रमः। अत्र परमेश्वरेण तुषारशैलभुवो दुर्गाया गृहीतः करः । अत्र लोकनाथेन दिशां मुखेषु परिकल्पिता लोकपालाः सकलभुवनकोशश्चाग्र्यजन्मनां विभक्त इति । एवमादयः प्रथमकृतयुगस्येव दृश्यन्ते महासमारम्भाः । अतोऽस्य सुगृहीतनाम्नः पुण्यराशेः पूर्वपुरुषवंशानुक्रमेणादितः प्रभृति चरितमिच्छामः श्रोतुम् । सुमहान्कालो नः शुश्रूषमाणानाम् । अयस्कान्तमणय इव लोहानि नीरसनिष्ठुराणि क्षुल्लकानामप्याकर्षन्ति मनांसि महतां गुणाः, किमुत स्वभावसरसमृदूनीतरेषाम्, कस्य न द्वितीयमहाभारते भवेदस्य चरिते कुतूहलम्, आचष्टां भवान् । भवतु भार्गवोऽयं वंशः शुचिनानेन राजर्षिचरितश्रवणेन सुतरां शुचितरः, इत्येवमभिधाय तूष्णीमभूत्,

बाणस्तु विहस्याब्रवीत् ‘ आर्य ’ न युक्तयनुरूपमभिहितम् । अघटमानमनोरथमिव भवतां कुतूहलमवकल्पयामि, शक्याशक्य परिसंख्यानशून्याः प्रायेण स्वार्थतृषः परगुणानुरागिणी प्रियजनकथाश्रवणरसरभसमोहिता च मन्ये महतामपि मतिरपहरति प्रविवेकम् । पश्यत्वार्यः क्व परमाणुपरिमाणं बटुहृदयम्, क्व समस्तब्रह्मस्तम्भव्यापि देवस्य चरितम्, क्व परिमितवर्णवृत्तयः कतिपये शब्दाः, क्व संख्यातिगास्तद्गुणाः। सर्वज्ञस्याप्ययमविषयः वाचस्पतेरप्यगोचरः सरस्वत्या अप्यतिभारः, किमुतास्मद्विधस्य, कः खलु पुरुषायुषशतेनापि शक्नुयादविकलमस्य चरितं वर्णयितुम् । एकदेशे तु यदि कुतूहलं वः, सज्जा वयम्, इयमधिगतकतिपयाक्षरलवलघीयसी जिह्वा कोपयोगं गमिष्यति । भवन्तः श्रोतारः ।

वर्ण्यते हर्षचरितम् । किमन्यत्, अद्य तु परिणतप्रायो दिवसः । पश्चाल्लम्बमानकपिलकिरणजटाभारभास्वरो भगवान्भार्गवो राम इव समन्तपञ्चकरुधिर महाह्रदे निमज्जति संध्यारागपटले पूषा, श्वो निवेदयितास्मि,' इति । सर्वे च ते 'तथा' इति प्रत्यपद्यन्त, नातिचिरादुत्थाय संध्यामुपासितुं शोणमयासीत् ।

हर्षचरितम्

(६५)

## सायंसमयवर्णनम् ।

अथ मधुमदपल्लवितमालवीकपोलकोमलातपे मुकुलितेऽह्नि कमलिनीमीलनादिव लोहिततमे तमोलिहि रवौ लम्बमाने, रविरथतुरगमार्गानुसारेण यममहिष इव धावति नभसि तमसि, क्रमेण च गृहतापसकुटीरकपटलावलम्बिषु रक्तातपच्छेदैः सह संहृतेषु वल्कलेषु, कलिकल्मषमुषि पुष्णति गगनमग्निहोत्रधामधूमे, सनियमे यजमानजने मौनव्रतिनि, विहारवेलाविलोले पर्यटति पत्नीजने, विकीर्यमाणहरितश्यामाकशालिपूलिकासु, दुग्धासु होमकपिलासु, हूयमाने वैतानतनूनपाति, पूतविष्टरोपविष्टे कृष्णाजिनजटिले जटिनि, जपति बटुजने, ब्रह्मासनाध्यासिनि ध्यायति योगिगणे, तालध्वनिधावमानानन्तान्तेवासिनि अलसवृद्धश्रोत्रियानुगमनेन गलद्ग्रन्थदण्डकोद्गारिणि संध्यां समवधारयति वठरविटवटुसमाजे, समुन्मज्जति च ज्योतिषि तारकाख्ये खे प्राप्ते प्रदोषारम्भे, भवनमागत्योपविष्टः स्निग्धैर्बन्धुभिश्च सार्धं तयैव गोष्ठ्या तस्थौ, नीतप्रथमयामश्च गणपतेर्भवने परकल्पितं शयनीयमसेवत । इतरेषां तु सर्वेषां

निमीलितदृशामप्यनुपजातनिद्राणां कमलवनानामिव सूर्योदयं प्रतिपालयतां कुतूहलेन कथमपि सा क्षपा क्षयमगच्छत्।

( ६६ )

## प्रातस्तनी अश्वस्थितिः।

अथ यामिन्यास्तुर्ये यामे प्रतिबुद्धः स एव वन्दी श्लोकद्वयमगायत–

पश्चादङ्घ्रिं प्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चै–
रासज्याभुग्नकण्ठो मुखमुरसि सटा धूलिधूम्रा विधूय॥
घासग्रासाभिलाषादनवरतचलत्प्रोथतुन्दस्तुरङ्गो
मन्दं शव्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण॥ ५॥

कुर्वन्नाभुग्नपृष्ठो मुखनिकटकटिः कंधरामातिरश्चीं
लोलेनाहन्यमानं तुहिनकणमुचा चञ्चता केसरेण॥
निद्राकण्डूकषायं कषति निविडितश्रोत्रशुक्तिस्तुरङ्ग–
स्त्वङ्गत्पक्ष्माग्रलग्नप्रतनुबुसकणं कोणमक्ष्णः खुरेण॥ ६९॥

हर्षचरितम्

( ६७ )

## श्रीकण्ठजनपदवर्णनम्।

बाणस्तु तच्छ्रुत्वा समुत्सृज्य निद्रामुत्थाय प्रक्षाल्य वदनमुपास्य भगवतीं संध्यामुदिते भगवति सवितरि गृहीतताम्बूलस्तत्रैवातिष्ठत्। अत्रान्तरे सर्वेऽस्य ज्ञातयः समाजग्मुः, परिवार्य चासांचक्रुः। असावपि पूर्वोद्घातेन विदिताभिप्रायस्तेषां पुरो हर्षचरितं कथयितुमारेभे–

श्रूयताम्—अस्ति पुण्यकृतामधिवासो वासवावास इव वसुधामवतीर्णः, सततमसंकीर्णवर्णव्यवहारस्थितिः कृतयुगव्यवस्थः स्थलकमलबहलतया पोत्रोन्मूल्यमानमृणालैरुद्गीतमेदिनीसारगुणैरिव कृतमधुकरकोलाहलैरुल्लिख्यमानक्षेत्रः, क्षीरोदपयःपायिपयोदसिक्ताभिरिव पुण्ड्रेक्षुवाटसंततिभिर्निरन्तरः, प्रतिदिशमपूर्वपर्वतकैरिव खलधानधामभिर्विभज्यमानैः सस्यकूटैः संकटसीमान्तः; समन्तादुद्घातघटीसिच्यमानैर्जीरकजूटैर्जटिलितभूमिः, उर्वरावरीयोभिः शालीयैरलंकृतः, पाकविशरारुराजमाषनिकरकिर्मीरितैश्च स्फुटितमुद्गफलकोशीकपिशितैर्गोधूमधामभिः स्थलीपृष्ठैरधिष्ठितः, महिषपृष्ठप्रतिष्ठित गायद्गोपालपालितैश्च कीटपटललम्पटचटकानुसृतैरवटुघटितघण्टाघटीराटितरमणीयैरटद्भिरटवीं हरवृषभपीतमामयाशङ्कया बहुविभक्तक्षीरोदमिव क्षीरं क्षरद्भिर्बाष्पच्छेद्यतृणतृप्तैर्गोधनैर्धवलितविपिनः, विविधमखहोमधूमान्धशतमन्युमुक्तैर्लोचनैरिव सहस्रसंख्यैः कृष्णशारैः शारीकृतोद्देशः, धवलधूलीमुचां केतकीवनानां रजोभिः पाण्डुरीकृतैः प्रमथोद्धूलनधूसरैः शिवपुरस्येव प्रवेशैः प्रदेशैरुपशोभितः, शाककन्दलश्यामलितग्रामोपकण्ठकाश्यपीपृष्ठः, पदे पदे करभपालीभिः पीलुपल्लवप्रस्फोटितैः करपुटपीडितमातुलुङ्गीदलरसोपलिप्तैः स्वेच्छाविचितकुङ्कुमकेसरकृतपुष्पप्रकरैः प्रत्यग्रफलरसपानसुखसुप्तपाथिकवनदेवतादीयमानामृतरसप्रपागृहैरिव द्राक्षामण्डपैः स्फुरत्फलानां च बीजलग्नशुकचञ्चुरागाणामिव समारूढकपिकुलकपोलसंदिह्यमानकुसुमानां दाडिमीनां वनैर्विलोभनीयोपनिर्गमः, वनपालपीयमाननारिकेलरसासवैश्च पथिकलोकलुप्यमानपिण्डखर्जूरैर्गोलाङ्गूललिह्यमानमधुरामोदपिण्डीरसैश्चकोरचञ्चुजर्जरितारुकैरुपवनैरभिरामः तुङ्गार्जुनपालीपरिवृतैश्च गोकुलावतारकलुषितकूलकीलालैरध्वगशतशरण्यैररण्यधरावन्धैरवन्ध्यवनरन्ध्रः, करभीयकुमारकपाल्यमानैरौष्ट्रकैरारभ्रकैश्च

कृतसंबाधः, दिशि दिशि रविरथतुरगविलोभनायेव विलोठनमृदितकुङ्कुमस्थलीरससमालब्धानामुत्प्रोथपुटैरुन्मुखैरुदरशायि किशोरकजवजननाय प्रभञ्जनमिव चापिबन्तीनां वातहरिणीनामिव स्वच्छन्दचारिणीनां वडवानां वृन्दैर्विचरद्भिरारचिताः, अनवरतक्रतुधूमान्धकारप्रवृत्तैर्हंसयूथैरिव बाणैर्धवलितभुवनः, संगीतगतमुरजरवमत्तैर्मयूरैरिव विभवैर्मुखरितजीवलोकः शशिकरावदातवृत्तैर्मुक्ताफलैरिव गुणिभिः प्रसाधितः, पथिकशतविलुप्यमानस्फीतफलै र्महातरुभिरिव सर्वातिथिभिरभिगमनीयः, मृगमदपरिमलवाहि मृगरोमाच्छादितैर्हिमवत्पादैरिव महत्तरैः स्थिरीकृतः, प्रोद्दण्डसहस्रपत्रोपविष्टद्विजोत्तमैर्नारायणनाभिमण्डलैरिव तोयाशयैर्मण्डितः, मथितपयःप्रवाहप्रक्षालितक्षितिभिः क्षीरोदमथनारम्भैरिव महाघोषैः पूरिताशः श्रीकण्ठो नाम जनपदः।

यत्र त्रेताग्निधूमाश्रुपातजलक्षालिता इवाक्षीयन्त कुदृष्टयः। पच्यमानचयनेष्टकादहनदग्धानीव नादृश्यन्त दुरितानि। छिद्यमानयूपदारुपरशुपाटित इव व्यदीर्यताधर्मः। मखशिखिधूमजलधरधाराधौत इव ननाश वर्णसंकरः। दीयमानानेकगोसहस्रशृङ्गखण्ड्यमान इव पलायत कलिः। सुरालयशिलावट्टनटंकनिकरनिकृत्ता इव व्यदीर्यन्त विपदः। महादानविधानकलकलाभिद्रुता इव प्राद्रवन्नुपद्रवाः। दीप्यमानसत्त्रमहानससहस्रसंतापिता इव व्यलीयन्त व्याधयः वृषविवाहप्रहतपुण्यपटहपटुरवत्रासिता इव नोपासर्पन्नपमृत्यवः। संततब्रह्मघोषबाधिरीकृता इवापजग्मुरीतयः। धर्माधिकारपरिभूतमिव न प्राभवद्दुर्दैवम्।

हर्षचरितम्

( ६८ )

## स्थाण्वीश्वरवर्णनम् ।

तत्र चैवंविधे नानारामाभिरामकुसुमगन्धपरिमलसुभगो यौवनारम्भ इव भुवनस्य, कुंकुममलनपिञ्जरितबहुमाहिषीसहस्रशोभितोऽन्तःपुरनिवेश इव धर्मस्य, मरुदुध्दूयमानचमरीवालव्यजनधवलितप्रान्त एकदेश इव सुरराज्यस्य, ज्वलन्मखशिखिसहस्रदीप्यमानदशदिगन्तः शिबिरसंनिवेश इव कृतयुगस्य, पद्मासनास्थितब्रह्मर्षिध्यानाधीयमानस लाकुशलप्रशमः प्रथमोऽवतार इव ब्रह्मलोकस्य, कलकलमुखरमहावाहिनीशतसंकुलो विपक्ष इवोत्तरकुरूणाम्, ईश्वरमार्गणसंतापानभिज्ञसकलजनो विजिगीषुरिव त्रिपुरस्य, सुधारससिक्तधवलगृहपंक्तिपाण्डुरः प्रतिनिधिरिव चन्द्रलोकस्य, मधुमत्तमत्तकाशिनीभूषणरवभरितभुवनो नामाभिहार इव कुबेरनगरस्य, स्थाण्वीश्वराख्यो जनपदविशेषः ।

यस्तपोवनमिति मुनिभिः, कामायतनमिति वेश्याभिः, संगीतशालेति लासकैः, यमनगरमिति शत्रुभिः, चिन्तामणिभूमिरित्यार्थिभिः, वीरक्षेत्रमिति शस्त्रोपजीविभिः, गुरुकुलमिति विद्यार्थिभिः, गन्धर्वनगरमिति गायनैः, विश्वकर्ममंदिरमिति विज्ञानिभिः, लाभभूमिरिति वैदेहकैः, द्यूतस्थानमिति बन्दिभिः, साधुसमागम इति सद्भिः, वज्रपञ्जरमिति शरणागतैः, विटगोष्ठीति विदग्धैः, सुकृतपरिणाम इति पथिकैः, असुरविवरमिति वातिकैः, शाक्याश्रम इति शमिभिः, अप्सरःपुरमिति कामिभिः, महोत्सवसमाज इति चारणैः, वसुधारेति विप्रैरगृह्यत, ।

यत्र च मातङ्गगामिन्यः शीलवत्यश्च, गौर्यो विभवरताश्च, श्यामाः पद्मरागिण्यश्च, धवलद्विजशुचिवदना मदिरामोदिश्वसनाश्च, चन्द्रकान्तवपुषः

शिरीषकोमलाङ्गयश्च, अभुजङ्गगम्याः कञ्चुकिन्यश्च, पृथुकलत्रश्रियो दरिद्रमध्यकलिताश्च, लावण्यवत्यो मधुरभाषिण्यश्च, अप्रमत्ताः प्रसन्नोज्ज्वलरागाश्च, अकौतुकाः प्रौढाश्च प्रमदाः ।

यत्र च प्रमदानां चक्षुरेव सहजं मुण्डमालमण्डनं, भारः कुवलयदलदामानि, अलकप्रतिबिम्बान्येव कपोलतलगतान्याक्लिष्टाः श्रवणावतंसाः पुनरुक्तानि तमालकिसलयानि, प्रियकथा एव सुभगाः कर्णालङ्कारा आडम्बरः कुण्डलादिः, कपोला एव सततमालोककारका विभवो निशासु मणिप्रदीपाः, निःश्वासाकृष्टमधुकरकुलान्येव रमणीयं मुखावरणं कुलस्त्रीजनाचारो जालिका, वाण्येव मधुरा वीणा बाह्यविज्ञानं तन्त्रीताडनम्, हासा एवातिशयसुरभयः पटवासा निरर्थकाः कर्पूरपांसवः । अधरकान्तिविसर एवोज्ज्वलतरोऽङ्गरागो निर्गुणो लावण्यकलङ्कः, कुङ्कुमपङ्कः, बाहव एव कोमलतमाः परिहासप्रहारवेत्रलता निष्प्रयोजनानि मृणालानि, यौवनोष्म स्वेदबिन्दव एव विदग्धाः कुचालंकृतयो हारास्तु भाराः, श्रोण्य एव विशालस्फाटिकशिलातलचतुरस्रा रागिणां विश्रमकारणमनिमित्तं भवनमणिवेदिकाः, कमललोभनिलीनान्यलिकुलान्येव मुखराणि पदाभरणकानि निष्फलानीन्द्रनीलनूपुराणि, नूपुररवाहूता भवनकलहंसा एव समुचिताः संचरणसहाया ऐश्वर्यप्रपञ्चाः परिजनाः ।

# NOTES.



(1) गद्यपद्य मुक्ताहारः—A garland of pearls ( gems ) from prose and poetry or choice selections from prose and poetry. अस्ति-Ind; very often used to introduce a new story, merely as an expletive. श्रेष्ठिन्-Merchant. नितांतं विषयासक्तः-Extremely addicted to sensual pleasures such as द्यूत, मद्य, मृगया &c. given later on. कुपुत्रदुःखेन पीडितम्-Afflicted by the pain of having a vicious son. हरिदत्तस्तु-तु is used here in the sense of now, And now without any adversative force. अथैकदा (अथ is used in the senes of afterwards) Afterwards, once upon a time पित्रोस्ते etc.-Since, your unhappy father sheds tears through grief &c. Construe:-यदि ते दुःखिनः पित्रोः दुखात् अश्रुचयः पतति, वत्स, तेन पापेन, ते पतनं देवशर्मवत् ( भविष्यति ). अधीतविद्यः—Learned. पित्रोः प्रच्छन्नतया—Without informing his parents. पुरुषोत्सर्गः कृतः-Dropped exereta upon his head. क्रोधाकुलितनेत्रः-क्रोधेन आकुलिते नेत्रे यस्य सः-With his eyes affected by anger. यावत्-तावत्-No sooner than. स्वभर्तृशुश्रूषापरा-Engaged in attending to the comfort of her husband. कोपास्पदम्-an object for your anger. Note that though the word qualifies a feminine subject (अहं for the woman) it is used in singular number and neuter gender. धर्मव्याधपार्श्वे-Name of the butcher. रक्तात्कहस्तं etc.—resembing yama ( the god of death ) as his hands were covered with blood and he was dealing in flesh. स्वागतप्रश्नपूर्वमुग्रहनीत्त्वां:-took him home with

great cordiality. ज्ञानकारणम्-Cause of their possessing knowledge of things not occuring before their eyes. निजान्वयप्रणीतं -Consonant with the customs of one's caste. पितृशुश्रूषको etc: -Even a common man serving his parents becomes &c. कुतःअहं असंभाष्यः-why am I not fit to be talked with ? कीर्तिभाजनम्-a receptacle of fame See note under कोपास्पदम्.

(2) भार्यांतरपुत्रेष्वेव स्नेहातिशयः-had great affection for his children from other wives यज्ञसभा -A gathering of men for performing asacrifice. तं महिदासम् अवज्ञाय अन्यान् पुत्रान् etc.- disregarding mahidas, took his other sons on his lap. स्वकीयकुलदेवता-family goddess. *viz.* "The earth"? उपवेश्य- having seated him (Causal) ' सर्वेषु अपि कुमारेषु-अवगमय्य-having made him more learned than the other sons. ब्राम्हणप्रतिभासनं—Inspiration of a Brahman. अग्निर्वै देवानाम् अवम् इत्यादिकम्-beginning with these words and ending with स्तृणुते &c. आरण्यकव्रतरुपम्-Name of one of the ब्राम्हणs. इतरायाःपुत्रेणम्-The present work. (प्रकृतब्राम्हणम्)-Is called ऐतरेय from its being composed by the son of इतरा.

(3) रथ्यांबु etc -Water from the streets which finds it way into the Ganges is honoured. Construe, सर्वलोहानां द्रवत्वात् सगंतं भवति, etc.-All metals are united when heated, deer and birds are brought together through affection, fools form friendship out of fear or avarice whilegood men are brought together merely by sight. विषायते-Frequentative of जलायते. शौण्डिनीहस्ते-In the hands of a wineseller. आश्रयवशेन etc.-The smallness or greatness of things depends upon

the things to which they resort विंध्यसमानाः-विंध्येन समानाः-As big as the विंध्य mountain. दर्पणे लघवः-Elephants look very small when reflected in mirrors. प्रहृदे संसर्गे etc.-It is a very ancient belief that serpents have got a jewel in their heads. This is not true. संतप्तायसि etc.-Water when placed upon red hot iron ( संतप्तायसि ) entirely disappears. नाम अपि न श्रूयते-Lit.-Even, its name is not heard; it disappears entirely. मुक्ताकारतया etc.-when standing upon a lotus leaf ( नलिनीपत्रस्थितं ), it shines out like a pearl (मुक्ताकारतया. स्वातौ सागरशुक्तिम् etc.-It was the ancient belief that rainwater falling in the स्वाति नक्षत्र in the oyster shells was the cause of the formation of pearls. This, as we know, is not the true explanation of the formation of pearls. सागरशुक्तिमध्यपतितम्-सागरे शुक्तयः तासां मध्यम्. तत्र पतितम् प्रायेण उत्तममध्यमाधमगुणाः etc.-The qualities whether of the best, middling or worst kind depend upon Company. साधूनां-खलत्त्वम्-Good men never become villains through the company of villains. आमोदं etc -धारयंति-A flower imparts its fragrance to earth but it never takes up the bad smell of earth, when it is kept in contact with earth.

(4) सर्षपान्गले etc.-Formerly, it was the custom of a thief being paraded through streets with the things stolen, tied about him. सर्षप-Mustard. तत्र अन्यत् किंचन अलभमानः-Not getting any thing else. राजपुरुषैः प्राप्तः—Was caught by police -officers. बलेःवर्षदिने etc.-Formerly it was the custom to tie mustard about the hands on the anniversary of बलि ( बलिप्रतिपदा ) and it was supposed to free one from danger. The

thief means to say, that as with the mustard tied about him, he was not free, so the above custom was not true.

(5) अपरेद्युः etc.-A lady whose husband has been absent wants to go to a paramour. The parrot detains her day after day, by telling her some story or other till her husband arrives. Construc:-सर्वैः संसारे सुखोपभोगःसारः ( इति ) निगद्यते; व्याघ्रमारीव उत्तरम् वक्तुं वेत्सिचेत् व्रज. All regard enjoyment of pleasures as the essence of this wordry life You can go if you are able to give a reply like व्याघ्रमारी i. e. the woman who scared away the tiger as told on later चपेट्या हत्वा—giving a slap. भयाकुलितचित्तः नष्ट—( भयेन आकुलितं चित्तं यस्य सः ), the tiger disappeared with his mind filled with horror ( that the woman could kill tigers ).

(6) गजगामिनि—qualifies the lady addressed. Means "having the gait of an elephant". व्याघ्रमारीव बुद्धिः etc.—If your presence of mind is not kept up for a second time. महत्कौतुकम् अत्र अर्थे-This part of the story is very interesting. मृगधूर्तः—Jackal. गूढप्रदेशम्—A hiding place. व्याघ्रमारी इति etc.-what we have read of in the books as tiger—killer. गृहीत करजीवितः-गृहीतं करे जीवितं येन सः With my safety put in danger. त्वया महत् कौतुकम् आवेदितम्-You tell a very strange story. वेला-Time of death. ममवेला स्मरणीया—My days should be numbered. इतिप्रश्नः—This was the question put by the lady to the parrot. विश्वस्य अद्य एकम् आनीय-having assured me ( that you would bring three, you have brought only one today.) व्याघ्रजात् qualifies भयात्—Danger arising from the tiger. तन्वि-Qualifies the lady add ressed. Means a slender woman.

(7) दिनावसाने-At the setting of the day. निघृष्टपृष्ठचरणः-With his back and feet rubbed against the ground ( as he was tied in the tiger's neck. देशांतरम् अपसपर्तुम् इच्छता-Desiring to go to another part of the Country ( to save himself from the tiger killer. ) सा पापिनी अस्मत्रक्तस्रावसंलग्ना पृष्टतः समेति-If she will track us out by the marks of blood shed upon the ground. The blood was gushing out from the jackal's body, and he means to say, that if the tiger continued his journey like that without leaving him the blood marks upon the ground will afford her a very, easy way of following them up. स्थिरीभूय विचारय-Think of this with a cool head. वरारोहे=वरौ आरोहौ यस्याःसा-a woman with beautiful things. कृशोदरि-a woman with a slender waist; qualifies the lady addressed. गिरिकूटोपभांगस्य-Whose body can be compared to a mountain. स्वापम् अगात्-Went to sleep.

(8) This lesson gives us some principles of practical importance in the form of questions and answers (प्रश्नोत्तर-माला.) अधिगततत्वः-अधिगतानि• तत्वानि येन सः-One who has mastered the principles ( of knowledge ). कः शुचिः—Who is pure; Answer; One whose conscience is clear. विवेकी—One who can discriminate between good and bad. सुधिया निश्चित्य—Results arrived at by a wise man. विषयः—Sensual pleasures. भववल्ली-The creeper of this world. अंधादपिको etc.-Who is worse off than the blind, the man with strong passions· ललनालोचनबाणैः हि न व्यथितः-who is not affected by the darts ( glances ) from the eyes of young women. Construe—अमृतमिव कर्णांजलिभिः पातुं किं युज्यते.-( कर्ण एव अंजलिः-कर्णांजलिः)-The

auditory passage of the ear. अप्रार्थनम्-not begging anything. Stanza. 7 तेन refers to स्त्रीचरितम् अधमे इह यांचा-begging from a low man. नलिनीदललवतरलम्-as flickering as a drop of water on the lotus leaf. The poet means to saythat life, youth and riches are as unstable as a drop of water on the lotus leaf. शशधरकरनिकरानुकारिण:-pure (lit imitators) like the rays of the moon ( शशधर ) सर्वसंगविरति:-keeping apart from all pleasures. अनाकांक्षम्-Disintrestedness. शीलम्-good character. वाचां मंडनम्-ornament to speech. Truth is the greatest ornament with which we can clothe our speech. अनर्थफलम्-Cause of Disasters or evils. अनर्घ्य-अवसरेदत्तम् ( न अर्घ्यं विद्यते यस्यतत् अनर्घ्यम् ) what is invaluable; that which is given at the right time.

(9) पिप्पलाध:-beneath a Pippala tree. पापानाम् अलम्, यत:-अश्रेयसे-enough of sinfuldeeds, because they conduce to bad results. कालक्रमेण-In due course of time मंत्रिन्—The minister of the king. सहस्रस्य पण: मुक्त:-I shall wager thousand coins. प्रतिभुवौ-Sureties. वृक्षकोटरं-hollow of the tree. नग-Tree. फूत्कुर्वंतम्-producing this sound ( फूत् ) ( applied specially to the hissing of serpents.) निग्रहम्-Treasure. गाथा-Story.

(10) करगरा इति अभिधानं यस्या:—करगराभिधाना—by name, karagara ( करे गरं यस्या:सा-with poison in her hand ) यथार्थं ना यस्या: सा-यथार्थनाम्नी-with a significant name. सर्वजंतूद्वेगकारिणी—troubling all the people. द्वारदेशवृक्षस्थित:—sitting on the tree, standing near her door. अन्य: देश:-देशांतरं-तस्य अभिमुखं:—देशांतराभिमुख: अभूत्-went to another Country. मम अतिथिना

भाव्यम्:-be my guest यथावत् उपकर्तव्यम् एव-I must oblige you accordingly. मदनभूपतिसनाथाम्-ruled by मदनपति. नीरुजा-free from disease. मांत्रिक-Those who can remove diseases with the help of मंत्र. मंत्रवादः न एव विधेयः-you need not say any mantras. व्यंतरेण आविष्टा-haunted by a ghost. समुचितं पुरस्कारं-due reward. घोषणा दत्ता-proclaimed. डिंडिमः स्पृष्टः-Touched the drum to show that he accepted the proclamation. आचार्य विस्तरम्-all the paraphernelia of a आचार्य to show that he was a learned man.

**(11)** अत्रांतरे-In the meanwhile. पितृष्वसा-aunt. जीवितशेषा. (जीवितमेव शेषः यस्याः सा )-lit. with her bare life.-She barely mannaged to live. मया प्रतिपन्नम् एकदेशे कृतम्-I have done what I promised in one case viz. the राजकन्या was left by him. मंत्र and तंत्रम्-मंत्र is chanting while तंत्र is doing all the necessary operations. कृतः अंजलिः येन-folding his hands ( generallyin reverence ) तत् व्याख्यातुम-To tell that viz that करगरा was come.

**(12)** पात्रम्—Viz that सुलोचना. पुत्तलिका—A golden circular piece used in ornaments (cf. पुतळी in marathi.) घृतौदनं-घृतंच ओदनंच तयोः समाहारः-Ghee and rice. स्वेच्छावृत्ति-The life of a vagabond or libertine. जन्मशतं नानायोनीः प्राप्नोति-It has to go through a number of stages ( viz. lives of many animals ) According to Hindu philosophy ( आत्मा is quite distinent from शरीर or body which is merely its cloak and it remains in a शरीर only Temporarily. महान् संतापःभविष्यति-You shall have to suffer very heavily. बालभाव—Child hood. यौवनेन तुष्टं

चित्तं येषांते-यौवनतुष्टचित्ताः Proud of their youth. शिशिरे अपवस्त्राः-Like men without clothes in cold season. किं-what is the use of. देहिन्-देहःविद्यते यस्य-lit. one who has a body i. e. man. अकुलीनः-not born in a high family. तैः-In sanskrit, plural is used when Speaking about a great man. सिद्धसारस्वतमंत्र-मंत्र-are said to be सिद्ध in the hands of man when he can use them efficiently.

(13) अनुचिंत्या-A thing to be pondered over. संसारासारता-the futulity of this life. चलितवृत्तम्-a man of unsteady character. कस्मात् उद्विजितव्यम्-from what should we turn away. संसारः एव अरण्यम्-संसाराण्यं तस्मात्-from the forest (i. e. entanglement) of this world दृष्टादृष्टार्थलाभाय—For the attainment of present and furure ends. न्याय्य-न्यायात् अनपेतं-न्याय्यम्—In the just path. विद्युत्विलसितम्—flash of lightening (It is very transient.) कुलशीलनिष्प्रपंचा—Men who do not look to the कुल or शील of other. चिंतामणिः-A rare jewel, supposed to give us what we want. प्रविगतं तमः येभ्यः-प्रविगततमसः-enlightened. त्यागसमेतम्-Coupled with charity. कुलमेव कमलं, तस्य दिनेशः कुलकमलदिनेशः The sun of the lotus of his family i. e. a shining star of the family. परधनहृदयहरा-परेषां धनंच हृदयंच हरतीति-Captivating the heart and wealth of others. विवेकवत्ता-power of discrimination. दांतः-One who has control overoneself. कमला-goddess of wealth. नीतिवृत्त-A man of good moral conduct. सालस्यः-Idle man. धीरविभवेन—with steady wealth. पिशुनयुत्-Malicious प्रणतकलत्रेण—one with an obedient wife (प्रणतंकलत्रंयस्य.) स्वभ्यस्ता-wellacquired. (सु+अभ्यस्ता). मुक्ता भरणा-pearl ornament (आभरणम्).

(14) प्रातःअस्मरणीयेत्वात्—Not fit to be thought of in the morning time. The morning time is very holy and hence one is expected to think of good things and not of such men as misers. कलांतरवाणिज्यादिभिः वर्तुलीकृतवित्तः-Amassed a large for tune in trade and industries. दुर्भिक्ष—Famine. एकाकी पुरुषः श्रीमान्-A man is rich only when alone i.e when his family expenses are not upon him. अन्येच सुहृदः सर्वे-All others are friends ( in name only ). धनमूलं कुटुंबकम्—Family has its basis in riches i.e. one can have, Family only when one has money where with to support them. अनागतावेक्षां-करोमि-I shall make a provisiou ( अवेक्षा ) for the future (अनागत). परालक्ष्यस्थाने-परै अलक्ष्ये स्थाने-In a place not seen by others i. e. in a secret place. परिवार-Dependants. कंठगतप्राण-About to die. Construe:-तत् ( धनं ) प्रार्थयद्भिः मम प्राणाः किंनव गृह्यंते यतः धने ( मम ) शुचः न स्युः-Wealth is the very life of a miser; and when you ask me for it, you can as well take my life so that I need not mourn for the (loss of) it. प्राणमात्रावशेषः—Barely keeping alive. निराकुलः—Comfortably, without any pangs (of conscience). निजप्राणान् नश्यतः अनुमन्यसे-How do you allow yourself to be starved (lit killed) when you have got money. दानभोगभवं सुखम्—Pleasure arising from charity or enjoyment of wealth. भुज्यते यत् न कामतः—Which is not enjoyed with pleasure. किमपि कुरुत-Do as you like, say what you will. प्राणव्ययेनापि-स्वी क्रियते-I would not prefer the loss of life even to loss of wealth. धनपोटलकम्-A small bundle containing money. नाविकं धीवरम्-A fisherman with a boat. त्यक्तकामेन-Though I have no desire, to sav

my life. परिवारशोकाकुलम्–Grieved at the loss of family. वेतनवेन-By way of the hire of your services ( for killing the miser ). दित्सा–Desiderative of दा-desire to give. दाहविशुद्धानि–purified by burning i. e. melting. पुण्यार्थम् एव–for charity's sake. कृतार्थः–one who has attained his end ; hence happly or successful. जनयति-The subject is the wealth of a miser. मंगलं न प्रसूते-Does not give ri-e to any good Act. परिहरति यशांसि-Deprives a man of his fame. ग्लानिम् आविष्करोति–Produces exhaustion. उपकृति रहितानां and सर्वभोगन्युतानां qualify. संपदां-miser's wealth does not help anybody nor does it give any enjoyment to him. दुर्विपाकः–A fatal result; an evil end.

**(15)** सत्वानि—animals. एकैकसत्वपरिकल्पनव्यवस्था—an arrangement by which one animal was to be given daily. शशक-rabbit. वारक–Turn. कराल-fierce. वेलातिक्रमः-delay. झंपाम् अदात्–Jumped. अल्पसत्वेन-of feeble strength. इषुः-arrow. सराष्ट्रेन संहितं-with the nation to help him. मंत्रिनिश्चयः—The will of a minister.

**(16)** सचिवाग्रणीः-Prime-minister. बुद्धिविभवाक्रांतः-Overcome by the power of his genius. करदा—Paying trilute or taxes. सानुरागेण (अनुरागेण सहितः)-Devoted, attached. कः गुणः स्यात्–What is the use of. प्रज्ञाविक्रमशालिनः–Possessing intellect and bravery. Construe:–येषां प्रज्ञाविक्रमभक्तयः गुणाः नृपते भूतये समुदिताः ते भृत्या, इतरे संपत्सु, आपत्सुच नृपतेः कलत्रम—Those alone, are the real servants of a king who exert their, brains, bravery and devotion for the benefit of their king ; others are

merely his wives through adversity and prosperity. प्रज्ञागुप्तशरीरस्य-प्रज्ञया गुप्तंशरीरं यस्य सः–whose body is protected by his genius. संहताः–United. qualifies अरयः हस्तोपगृतछत्रः-one with umbrella in his hands. निर्द्रव्यांच मेदिनीं विदधानः-making the earth poor. अवटः-pit. घोटिका द्वयम्-a pair of horses. शालिहोत्र–an expert in horses. sloka 3. the poet contrasts the loss of a servant with the loss of a country. दंडपाशिकम्-the कोतवाल-a police officer. पूर्वोद्दिष्टं भक्तम्-when tbrown into the pit the king had ordered certain rations to be given to him; the kotwal means to say, someone reeives them but he could not say who individually. स्वामी दुर्णय etc.-a Teacher in warding off form evil things. विश्रंभे हृदयम्–A heart to confide things i.e. very confidential, just tike one's heart. नियोग–orders. सप्तसमुद्र-etc. रशना एव दाम-रशनादाम (रशना—girdle round the waist दामन्-rope ). सप्तसमुद्राणां सीमा एव रशना दाम तत् यस्याः अंतिकम् सा. which is bounded by the girdle of 7 oceans सर्वाकारम् अभूः—You have served me in all these relations. को वा न कर्णो मम—this is attributed to दुर्योधन. He means to says that कर्ण was all in all to him ; " whatis not Karna to me in i. e. Karna serves me in all capacities. Similarly here the king was served by his minister. सपर्याणम् ( पर्याणेन सहितम् )—harnessed. वाह्यालि—outer lane.

(17) मखमुख्ये–the principal man at the यज्ञ or sacrifice. मितभवत् etc.—मितम् भवता अर्पितम् वसनं, अशनंच तेनैव जीवनं येषांते—who are living on the scanty food and clothing which you have given them. The poet means to say he can not depend upon such people. The style and reasoning of these

Aryas correspond to मोरोपंत's संशयरत्नमाला. They are of a devotional kind. सर्वंदे त्वयि etc.–How can this ignorance befit you when you are ominscient. लिप्सा—desiderative from लभ् to get. दातरिदित्सा etc.—but the desire to give is quite thrown away by the donor even though the mendicant is wishing it. This is called कृपण. कथा—a bad conduct. रंकम्—a lowly man. स्वात्मना एव मे वृत्तिं करु—Maintain me by yourself. सामान्यम् इव विशेषः-like an excaption to a rule ( सामान्यम् ). The poet means to say, that as a general rule, he is kind to all ; and why is he an exception in his case. मानुषी—woman. लोलद्भुजपदमस्तक—With the head, hands and feet drooping ; i. e. in a very miserable condition. ते विरुदमाला न रथैः उपयाति—the garland of your praises can not be carried away even when loaded in chariots ; i. e. Rama's virtues and the praise for the same is so great in extent that even chariots can not carry it. In other words, his virtues are innumerable. विश्वगीतम् —a song sung by all. पल्वल इव etc.—just as the cloud supplies water to a small pool without receiving any service from him ; so you give me help though I have not served you. सेवक वंश भवत्वात्—being born from a family which had served you. निजजाठरवन्हेःजयाय—lit. for the appeasing of the fire in the stomach i. e. for the sake of their bread. अज्ञालससंततीतंसततपीडा परंपराशात्यै—for preventing harm to one's ignorant and indolent posterity. चित्तचमत्कृतिकारणम्-strange. त्वन्मुखसौरभचर्वित तांबूलाशम्—expecting to get the fragrant तांबूल masticated in your mouth. सन्मुखतायै चिवुकं ( chin ) करेण कर्षतम् —touching his mother's chin with his hand so that she

may turn her face towards him. सिंदूराचलवासिनि—residing on the सिंदूर mountain ( अचल ). रामाभिधे qualifies मातः ( राम इति अभिधा यस्याः सा.)

**(18)** **संसर्गबर्बर-A** blockhead by company i. e. one who becomes a blockhead by keeping bad company. हीनसंसर्ग—company with low born. बालिशः—ignorant ; fool; purile. प्रचुरतृणांकुरा—rich in grass. स्थली—Lit. place; here pasture ground. गोरक्षणोपजीविनः—living on cow-tending. अदुष्टपुरुषव्यवहार—who had not seen much of life. जरती—old. त्वदेकगतिः—wholly depending upon you. पोषण साध्यं हि etc.—old men can pull on if properly cared by others. मातृस्नेहपरवशः-overcome by the love for his mother. गोपोपणपदार्थव्युत्पन्न—expert in cattle-feeding. परिपाटि-Method, Routine of the मराठी-परिपाठ: गोपुच्छलोम ( hair ) चित्रित दाम्ना ( rope ) with a rope variegated with hairs from cows' tails. गले बध्द्वा-Tieing her by neck. करीषाग्निम्-fire produced by burning dry cow-dung. घासकवलप्रदान—offering her morsels of grass. वराकी-A poor woman. तथा पराभवम् अनुभवन्ति—Insulted in this manner. प्रतिवेशिगोपैः—neighbourly cowherds. जीवनादृष्टजीवितः-who had seen nothing of life save that required for his livelihood.

**(19)** गणकः—Astrologer. पुत्रमनोरथेन-with the affection of a son i. e. very affectionately. पदार्थं न अधिगच्छति—does not know the meaning of any word. परितोषवान्—willingly. लोकद्वयं प्रत्याशायाः अंकुरः—His son was the source of his hopes i. e. basis of happiness both in this and the next world. सकलमनोरथस्थानम्-Note the use of this in neuter gender. See note

1st lesson the centre of all his aspirations. कर्मांतरपरांमुखः—Disregarding his other pursuits. तस्य इच्छया अवहितः—According to the bend of his mind. महता समयेन—after a good deal of time. राज्ञः परिचितगुणं करोमि—I shall bring his merits to the notice of the king. प्रश्नं जानाति—knows how to read the future. अंगुलीयक—ring. मुष्टीकृत्वा—holding in his palm कंठिनीम् आदाय—taking a chalk stick. शास्त्रानुसारेण—according to scientific rules संवादिनी वाक्—A consistent speech. मंडलाकृति-Circular. गुरुद्रव्यं &c. the thing is costly and is hollow in the middle. जातरभसः—becoming impatient. पुलकितबाहमूलः-पुलकाः संजाताः यस्मिन् तत्-पुलकितं बाहुरमूलंयस्य—with his hairs standing on the arms (in joy). निजोहेन—ऊह—gueos or conjecture. पाषाणघरट्टकमंडलम्—a round grinding stone. शास्त्रानुसारिण्यागणनया—Scientific calculation. तावत् संवादः एव-There was consistency. अव्याप्तिमूलकः तर्कः—According to Sanskrit logicians, a definition is wrong either when it is अव्याप्त or अतिव्याप्त-It is अव्याप्त when the definition does not include what it ought to include and अतिव्याप्त when it includes what it ought not to include. Thus the definition of a Brahmin as शिखासूत्रवान् is liable to both these objections because it does not include a संन्यासी who has not got शिखा or सूत्र; and it includes many though they are non-Brahmins. तर्क is the science of logic; a conclusion wanting in invariable concomitance (i. e. which is the thing necessary for a proper definition) i. e. it should be niether अव्याप्त nor अति व्याप्त तर्क here means conclusion. In tne following statement we have neither अतिव्याप्ति nor अव्याप्ति c. f यत्र

यत्र धूमः तत्र तत्र वन्हिः and hence there is invariable concomi. tance. यावत् अंबुधि—the sea marked the termination of Travels ; Travel by sea being then quite uncommon.

**(20)** तैलंगाभिजनः—an inhabitant of Telangana. मही-सुरसत्तमः—best of the Bramhins. वेदांतशास्त्र, न्यायवेदांतदर्शन, पूर्व-मीमांसा, महाभाष्य—are some of the important branches of study for a Pandit. आश्रयेच्छया—with a desire to get some support. शक्रोपमवैभवस्य—having wealth vying with that of Indra. मध्यमे वयसि—middle of life.

**(21)** जनपदः—country. सभासीनस्य (सभायां आसीनस्य)—while sitting in his council. आसन्नचरस्य कोशाधिकारिणः—The treasurer who was near at hand. क्रीडामर्कटपोताय—a young one of a monkey kept for sport. रक्षिणां हस्तच्युताय—having escaped from the hands of its keepers. भांडागारिक-Treasurer रश्मिज्वालाकुलान्—lustrous. विजनं नीत्वा—Taking him aside. साचिव्यसापेक्षम् साधनम्—An act requiring help. श्रमणः—A Sanyasi. कृष्णचतुर्दश्याम्—14th day of the dark half. बाढम्—surely, certainly. क्षांतिशीलः—क्षांतिः शीलं यस्य सः—Patient.

**(22)** नीलवसनेन समलंकृतशिराः—Tying a blue cloth round his head. दक्षिणामुखं गत्वा—going in a Southernly direction. सत्यसंगरः-सत्यः संगरः यस्य—whose promise was true i. e. faithful. छिन्नरज्जूम्—after cutting the rope that tied him to the tree. अट्टहासम् अकरोत्—laughed loudly. वेतालाधिष्ठितम्—haunted by a ghost. वज्रादपि अखंडितम्, अकंपच—harder and firmer than even adamant. अध्वविनोदाय—to pass our time on the way.

(**23**) सतां वर्त्म—the paths of the virtuous. मार्गस्थः न अवसीदति—one who tries ( to go along their paths) will not fail completely. तेन अश्मानः अपि देवताः—owing to these qualities, even stones become gods. जपतः न अस्ति पातकम्--one would not commit sins when one is reciting (holy things). सुलभा सा अन्यजन्मनि—Refers to the doctrine of rebirth; whatever we have tried to do in this life will be done far more easily by us in the next life ; we carry with us all the desires and ambitions of this life. Therefore, if we can not succeed in this life, we can easily do so in the next. परेषां अपवादः एव सस्यम्-परापवादसस्यम्-the poet compares our conduct to a cow and the censures of the public about us to grass. The cow ( our conduct ) should not be allowed to stray upon the grass (i. e. scandals). अनागतविधातारम्-who provides (विधाता) for the future (अनागत) स्थिरारंभम्-steady श्रीः वरं उपतिष्ठते–the goddess of wealth marries only such a bridgeroom.

(**24**) तदायतिः—from that time. अत्यादृतः—expert. दंडनीति—राजनीति—politics प्रगल्भवाच्—a lengthy speech. अर्थशास्त्रेषु आत्मसंस्कारम् अप्रतिपद्य—not having got initiation into political science. अनग्निशोधिता-not melted in fire. अत्युच्छ्रितः-exalted. परैः अध्यारुह्यमाणम्—influenced by others. साध्यं—end and साधन-means. सर्वाः स्थितीः संकिरेयुः—will throw affairs into confusion. इतः अमुतः च लोकात्—from this and the next world. आगमः एव दीपः । तेन दृष्टः-आगमदीपदृष्टः—lighted by the lamp of knowledge. दिव्यं चक्षुः etc. is in apposition with शास्त्रंनाम्—verily science is celestial vision into etc. व्यवहित-hidden, concealed विप्रकृष्ट-Distant, remote. अप्रतिहतवृत्ति—meets with

